मापदांनियतंपदम् ॥ १०० ॥ देहस्थंदुर्दमंशत्रुमसंतुष्टंसदावशम् ॥ इत्थंवादिनिप्रच्छन्नेवासवेपद्मसद्मनि ॥ १ ॥ आखण्डलंविना
भीरुदेवलोकोनशोभते ॥ ततोदेवाःसगन्धर्वालोकपालाःसकिन्नराः ॥ २ ॥ शच्यासहसमागम्यपप्रच्छुस्तेबृहस्पतिम् ॥ भगवन्बल
भिदंवनैवजानीमहेवयम् ॥ ३ ॥ क्वतिष्ठतिगतःकुत्रकुत्रवामृगयामहे ॥ ननाकःशोभतेतेनविनादेवगणैःसह ॥ ४ ॥ सुपुत्रेणविनायद्वत्कु
लंश्रीमद्गुणान्वितम् ॥ उपायश्चिन्त्यतांसद्यःस्वर्लोकोयेनशोभते ॥ ५ ॥ सनाथःसुश्रियायुक्तोनविलम्बोऽत्रयुज्यते ॥ इतितेषांवचःश्रुत्वागुरु
र्वचनमब्रवीत् ॥ ६ ॥ जानेऽहंस्वापराधेनलज्जयायत्रतिष्ठति ॥ रभसालब्धकार्यस्यभुङ्क्तेसमघवाफलम् ॥ ७ ॥ नृणांनीतिपरित्यागाद्विपाकाः
स्युर्भयङ्कराः ॥ अहोराज्यमदैर्मत्तःकृत्याकृत्यमचिन्तयन् ॥ ८ ॥ कृतवान्निन्द्यमानंहिदृष्टादृष्टक्षयङ्करम् ॥ कुर्वन्तिबालिशायत्रदै
वोपहतबुद्धयः ॥ ९ ॥ ॥ अपराधाद्यथाजन्मस्यादिहामुत्रनिष्फलम् ॥ अधुनातत्रगच्छामोयत्रशक्रःसतिष्ठति ॥ ११० ॥ इत्युक्त्वा
निर्गताःसर्वेबृहस्पतिपुरोगमाः ॥ दृष्ट्वासरसिविस्तीर्णेस्वर्णपङ्कजकाननम् ॥ ११ ॥ तुष्टुवुर्देवराजंतेप्रबोधोयेनजायते ॥ ततोगुरोः
प्रबोधेननिर्गतःपद्मकुड्मलात् ॥ १२ ॥ दीनाननोविरूपस्तुव्रीडाकुञ्चितलोचनः ॥ जग्राहचरणाविन्द्रोगुरोस्तस्याग्रजन्मनः ॥
॥ १३ ॥ त्राहिमांनिष्कृतिंब्रूहिपापस्यास्यबृहस्पते ॥ देवराजवचःश्रुत्वाजगौविप्रोबृहस्पतिः ॥ १४ ॥ शृणुदेवेन्द्रवक्ष्येऽहमुपायंपाप
नाशनम् ॥ प्रयागस्नानमात्रेणतत्क्षणादेवपातकात् ॥ १५ ॥ मुच्यसेदेवराजत्वंतत्रयामःसहैवते ॥ अथपुरोधसासार्धमागत्यबलमर्दनः ॥
॥ १६ ॥ सस्नौसितासितेतीर्थेसद्योमुक्तोह्यघैस्ततः ॥ अथदेवगुरुस्तस्मैप्रसन्नस्तुवरंददौ ॥ १७ ॥ प्रयागस्नानमात्रेणक्षीणंपापंतवानघ ॥
क्षीणपापस्यतेशक्रमत्प्रसादेनसत्वरम् ॥ १८ ॥ सहस्रमेतद्योनीनांसहस्रंस्याद्दृशांतव ॥ तदैवद्विजवाक्येनशुशुभेचशचीपतिः ॥ १९ ॥ लोचना
नांसहस्रेणपङ्कजैरिवमानसम् ॥ अथवृन्दारकैःसर्वैर्ऋषिभिश्चाभिपूजितः ॥ १२० ॥ गन्धर्वैःस्तूयमानस्तुगतःशक्रोऽमरावतीम् ॥ इत्थंसद्योविपापोऽ
भूत्प्रयागेपाकशासनः ॥ २१ ॥ याहित्वमपिकल्याणिप्रयागंदेवसेवितम् ॥ सद्यःपापविनाशायतथास्वर्गतयेदृढम् ॥ २२ ॥ इतितस्यवचः
श्रुत्वासेतिहासंसमङ्गलम् ॥ तदैवसंभ्रमापन्नानत्वापादौद्विजस्यतु ॥ २३ ॥ त्यक्त्वाबन्धुजनंसर्वंदासदासीगृहंतथा ॥ सकलान्विषयान्रक्षोविषग्रासानिव
स्फुटम् ॥ २४ ॥ वपुश्चक्षणविध्वंसिपश्यन्तीनिर्गताह्यहम् ॥ नरकार्णवसंपातदारुणान्तरवह्निना ॥ २५ ॥ हृदयेकुणपव्याप्तदातत्तप्यमानया ॥ मयागत्वा

१ 'लक्ष्म्या विना गुणा' इ० पा० । २ 'मुक्ता भवामो ह्यधुना वयम्' इ० पा० ।

कृतंस्नानंमाघेमासिसितासिते ॥ २६ ॥ तस्यस्नानस्यमाहात्म्यंशृणुवृद्धनिशाचर ॥ त्र्यहात्पापक्षयोजातःसप्तविंशतिभिर्दिनैः ॥ २७ ॥ शेषमेयदभू
त्पुण्यंतेनदेवत्वमागता ॥ रममाणातुकैलासेगिरिजायाःप्रियासखी ॥ २८ ॥ जातिस्मरातथाजाताप्रयागस्यप्रभावतः ॥ स्मृत्वाप्रयागमाहात्म्यं
माघेमाघेव्रजाम्यहम् ॥ २९ ॥ इतिराक्षसयत्पृष्टंत्वयाविस्मितचेतसा ॥ तन्मयाकथितंसर्वंचरित्रंप्रीतयेतव ॥ ३० ॥ मत्प्रीतयेचरितंस्वंत्वंब्रूहिमम
राक्षस ॥ कर्मणाकेनजातोऽसिविरूपोऽतिभयङ्करः ॥ ३१ ॥ श्मश्रुलोदीर्घदंष्ट्रश्चक्रव्यादोगिरिगह्वरे ॥ ३२ ॥ राक्षसउवाच ॥ इष्टंददातिगृह्णातिगुह्यं
वदतिपृच्छति ॥ प्रीत्याहिसज्जनोभद्रेतच्चसर्वंत्वयिस्थितम् ॥ ३३ ॥ त्वयासंभावितोनूनंमन्येऽहंवामलोचने ॥ भाविनीनिष्कृतिःसद्यस्त्वयास्यक्रूर
कर्मणः ॥ ३४ ॥ अतोवक्ष्यामितेभद्रेदुष्कृतंयत्स्वयंकृतम् ॥ निवेद्यसज्जनेदुःखंततःसर्वसुखीभवेत् ॥ ३५ ॥ शृणुसुश्रोण्यहंकाश्यांबह्वृचोवेदपारगः
जातःपुराद्विजःश्रेष्ठःकुलेमहतिनिर्मले ॥३६॥राज्ञांदुष्कृतिनांभीरुशूद्राणांचतथाविशाम्॥वाराणस्यांकृतोघोरोमयादुष्टप्रतिग्रहः ॥३७॥ बहुधाबहुधा
वारंनिषिद्धःकुत्सितोबहु ॥ चाण्डालस्यापिनत्यक्तोमयादुष्टप्रतिग्रहः ॥ ३८ ॥ अन्यच्चपातकंतत्रममाभून्मूढचेतसः ॥ तन्नास्तिदुष्कृतंकर्ममयायत्रन
यत्कृतम् ॥ ३९ ॥ अन्यच्चश्रूयतांदोषःक्षेत्रस्यवरवर्णिनि ॥ अविमुक्तेऽणुमात्रंयत्तदघंमेरुतांव्रजेत् ॥१४०॥ नधर्मस्तुमयाकश्चित्संचितस्तत्रजन्मनि॥
॥ ४१ ॥ ततोबहुतिथेकालेमृतस्तत्रैवशोभने ॥ अविमुक्तप्रभावेणनचाहंनरकंगतः ॥ ४२ ॥ अविमुक्तेमृतःकश्चिन्नरकंनेतिकिल्बिषी ॥ अविमुक्ते
कृतंकिंचित्पापंवज्रीभवेद्दृढम् ॥४३ ॥ वज्रलेपेनपापेनतेनमेजन्मराक्षसम् ॥ रौद्रंक्रूरतरंपापंसंभूतंहिमपर्वते ॥४४॥ द्विर्जातोगृध्रयोनौप्राक्त्रिर्व्याघ्रोद्विः
सरीसृपः ॥ एकवारमुलूकस्तुविड्वराहस्ततःपरम् ॥ ४५ ॥ इदंतुदशमंजन्मराक्षसंममभामिनि ॥ अतीतानिसहस्राणिवर्षाणिममजन्मनः ॥ ४६ ॥
नास्तिमेनिष्कृतिर्भद्रेएतस्माद्दुःखसागरात् ॥ अत्रत्रियोजनंसुभ्रूर्निर्जन्तुहिमयाकृतम् ॥ ४७ ॥ अनामसांचभूतानांबहूनांचकृतःक्षयः ॥ कर्मणातेन
मेसुभ्रूर्दह्यतेसततंमनः ॥ ४८ ॥ त्वद्दर्शनसुधासिक्तंगतंशैत्यंमनोमम ॥ तीर्थंफलतिकालेनसद्यःसाधुसमागमः ॥४९॥ अतःसत्संगतिंसुभ्रूःप्रशंसन्ति
मनीषिणः ॥ एतत्तेकथितंसर्वंस्वदुःखंहृद्गतंमया ॥१५०॥ विरलःसज्जनःसुभ्रूःस्वात्मायस्यनखिद्यते ॥ जानास्यत्रोचितंत्वंहिकिंचिन्नोवच्म्यतःपरम्॥
॥ ५१ ॥ अस्यदुःखोदधेःपारंकथंयामीतिचिन्तयन् ॥ सज्जनानांसमाभूतिःसर्वेषामुपजीवनम् ॥ ५२ ॥ क्षीरार्णवःपयोदत्तेहंसायनबकायकिम् ॥
॥ ५३ ॥ दत्तात्रेयउवाच ॥ इतितस्यवचःश्रुत्वादयार्द्रीकृतमानसा ॥ धर्मदानेमतिंकृत्वाजगौकाञ्चनमालिनी ॥ ५४ ॥ करिष्येनिष्कृतिंरक्ष

१ 'वर्षाणां पञ्चसप्ततिः' इ० पा०। २ 'यामि सुलोचने' इ० पा०।

इदानींखलुमाशुचः ॥ प्रतिज्ञांतुदृढांकृत्वायतिष्येतवमुक्तये॥५५॥बहवोहिकृतामाघावर्षेवर्षेयथाविधि ॥ श्रद्धापूर्वंमयाभद्रब्रह्मक्षेत्रेसितासित ॥५६॥
तांवदामितुसङ्ख्यातिंतस्यधर्मस्यराक्षस ॥ गूढोधर्मोहिकर्त्तव्यइत्यूचुर्विबुधाजनाः ॥ ५७ ॥ आर्तेदानंप्रशंसन्तिमुनयोवेदवादिनः ॥ सागरेवर्ष
तोभद्रकिंमेघस्यफलंभवेत् ॥ ५८ ॥ अनुभूतंमयारक्षःस्वयंतत्पुण्यजंफलम् ॥ तत्तुदास्यामितेमित्रसद्यःपापविनाशनम् ॥ ५९ ॥ निष्पीड्याथततो
वस्त्रंजलंकृत्वाकराम्बुजे ॥ ददौसामाघजंपुण्यंतस्मैवृद्धायरक्षसे ॥१६०॥ शृणुराजन्विचित्रंहिप्रभावंमाघधर्मजम् ॥ तदैवंप्राप्यतत्पुण्यंविमुक्ताराक्षसी
तनुः ॥ ६१ ॥ संभूतोदेवताकारस्तेजोभास्करविग्रहः ॥ देवयानंसमारूढःसहर्षोत्फुल्ललोचनः ॥ ६२ ॥ द्योतमानस्तदाव्योम्निभासयन्प्रभया
दिशः ॥ दिव्यरूपधरोरेजेद्वितीयइवभास्करः ॥ ६३ ॥ ततोऽभिनन्दयामाससतांकाञ्चनमालिनीम् ॥ भद्रवेत्तीश्वरोदेवःकर्मणांयःफलप्रदः ॥६४॥
तत्त्वयोपकृतंसर्वंयत्रमेनास्तिनिष्कृतिः ॥ इदानीमपिकारुण्यात्प्रसीदानुग्रहंकुरु ॥ ६५ ॥ शिक्षांविधेहिमेदेविसर्वंनीतिमयींशुभाम् ॥ सर्वधर्म
करींनूनंनकुर्वेपातकंयथा॥६६॥तांश्रुत्वात्वदनुज्ञातःपश्चाद्यामिसुरालयम्॥६७॥दत्तात्रेयउवाच ॥ एतन्निशम्यतेनोक्तंप्रियंधर्ममयंवचः ॥ अतिप्रीत्या
ब्रवीद्धर्मंराजन्काञ्चनमालिनी॥६८॥धर्मंभजस्वसततंत्यजभूतहिंसांसेवस्वसाधुपुरुषाञ्जहिकामशत्रुम् ॥ अन्यस्यदोषगुणकीर्तनमाशुहित्वासत्यंवदार्च
यहरिंव्रजदेवलोकम्॥६९॥देहेऽस्थिमांसरुधिरेस्वमतिंत्यजत्वंजायासुतादिषुसदाममतांविमुञ्च॥पश्यानिशंजगदिदंक्षणभङ्गुरंहिवैराग्यभावरसिकोभव
योगनिष्ठः॥१७०॥प्रीत्यामयानिगदितंतवधर्ममार्गंचित्तेनिधेहिसकलंभवशीलयुक्तः ॥ संत्यज्यराक्षसतनुंधृतदेवदेहोज्योतिर्मयोव्रजयथासुखमाशुना
कम् ॥ ७१ ॥ श्रुत्वाधर्मंततोहृष्टःसंतुष्टोराक्षसोऽब्रवीत् ॥ भवप्रमुदितानित्यंसर्वदाशिवमस्तुते ॥७२॥ आचन्द्रार्कंरमस्वत्वंकैलासेशिवसन्निधौ ॥
उमयाऽखण्डितंप्रेमतवास्तुवरवर्णिनि॥७३॥धर्मनिष्ठातपोनिष्ठामातस्त्वंभवसर्वदा ॥ मास्तुलोभःशरीरेतआपन्नार्तिसदाहर॥७४॥इत्युक्तातुप्रणम्याथ
सतांकाञ्चनमालिनीम् ॥ जगामराक्षसःस्वर्गंगन्धर्वैर्बहुभिःस्तुतः ॥ ७५ ॥ देवकन्यास्तदागत्यववर्षुःपुष्पवृष्टिभिः ॥ तस्याःकाञ्चनमालिन्यामूर्ध्नि
हर्षसमाकुलाः ॥ ७६ ॥ तामालिङ्ग्यततःप्रोचुःकन्यकास्तुप्रियंवचः ॥ कृतंभद्रेत्वयाचित्रंराक्षसस्यविमोक्षणम् ॥ ७७॥ दुष्टस्यास्यभयात्कश्चिद्विश
त्यस्मिन्नकानने ॥ अधुनानिर्भयाह्यत्रविचरामोयथासुखम् ॥ ७८ ॥ श्रुत्वातद्वचनंराजंस्तासांकाञ्चनमालिनी ॥ हृष्टातेनैवदानेनकृतकृत्यातदा
सती ॥ ७९ ॥ तंराक्षसंकाञ्चनमालिनीवरागन्धर्वकन्यापरिमोच्यसत्वरम् ॥ क्रीडन्त्यमूभिःप्रययौहरालयंप्रीत्यासपूर्णाचपरोपकारया ॥ १८० ॥

॥ १२४ ॥

१ 'नानुवक्तुं समर्थाहं संख्यां' इ० पा० ।

संवादमेनंवरकन्यकेरितंभक्त्यापरंयःशृणुयाच्चमानवः ॥ नबाध्यतेजातुसदासराक्षसैर्धर्मेमतिस्तस्यभृशंहिजायते ॥ १८१ ॥ इतिश्रीपाद्मेमहापुराणे पश्चप०उत्तर०माघमासमाहात्म्येदिलीपवसिष्ठसंवादेराक्षसमोक्षोनामषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ वसिष्ठउवाच ॥ कथितंमाघ माहात्म्यंदत्तात्रेयेणभाषितम् ॥ आधुनाहंप्रवक्ष्यामिमाघस्नानस्ययत्फलम्॥१॥सर्वक्रतुवरिष्ठंतुसर्वदानफलप्रदम् ॥ सर्वव्रततपस्तुल्यंमाघस्नानंपर न्तप ॥ २ ॥ स्नानेनमाघस्यविशुद्धमानसाःपितॄन्दिविस्थाप्यकुलद्वयस्यवै ॥ स्वर्गंप्रयान्तिस्वयमुज्ज्वलाननावरैर्विमानैरुचिरैश्चकामगैः ॥ ३ ॥ येमानवाःपापकृतोऽपिसर्वदासदादुराचाररताविमार्गगाः ॥ स्नात्वाहिमाघेहरिमर्चयन्तियेमुञ्चन्तितेऽपीहमहाघसंचयम् ॥ ४ ॥ सत्येनहीनाः पितृमादुःखदाह्यनाश्रमस्थाःकुलधर्मवर्जिताः ॥ येदाम्भिकास्तेऽपिनराःसतांगतिंस्नानैःप्रयान्त्यत्रहिमाघसंभवैः ॥ ५ ॥ पुण्येषुतीर्थेषुचमाघ मासेस्नानंनराणामतिदुर्लभंभुवि ॥ तस्माद्यतोब्रह्मविदांपदंनरैःसंप्राप्यतेनात्रविचारणामम ॥ ६ ॥ माघेतपोदानजपप्रसेवनंस्थानंहरेःपूजन मक्षयंनृप ॥ तस्माद्यथाशक्तिनरैःप्रयत्नतःस्नात्वाप्रदेयंवमनोन्नकाञ्चनम् ॥ ७ ॥ माघेऽन्नदाताऽमृतपःसुरालयेहेम्नश्चदाताबलभित्समी पगः ॥ दीपाग्निवासांसिददन्नरःसदासूर्यस्यलोकेवसतिप्रभामयः ॥ ८ ॥ यज्ञैःसुदानैःसुतपोभिरुज्ज्वलैःसुब्रह्मचर्यार्चनयोगसेवया ॥ शुद्धाभवन्तीहतथानपापिनःस्नानैर्यथापुण्यभवैस्तुमाघजैः ॥ ९ ॥ दुःखौघसंततिमसह्ययातनांयाम्यांनतेयान्त्यपिपापकारिणः ॥ येमाघ मासेवरतीर्थमज्जनंकुर्वन्तिचार्धोदितसूर्यमण्डले ॥ १० ॥ स्नात्वाचमाघेहरिमर्चयन्तियेस्वच्युताभूपतयोभवन्ति ॥ भव्याःसुरूपाःसुभगाः प्रियंवदाधर्मान्विताभूरिधनाःशतायुषः ॥ ११ ॥ दीप्तानलेकाष्ठचयोयथाहुतोभस्मावशेषोभवतीहतत्क्षणात् ॥ स्नानेनमाघस्यतथाविली यतेक्षुद्रोऽपिपापौघमहाघसंचयः ॥ १२ ॥ कायेनवाचामनसापिपातकंज्ञातंयदज्ञातमलङ्कृतंनरैः ॥ स्नानंचमाघेवरतीर्थसंभवंसर्वंदहेद्विष्णुरिवा शुद्धृतः ॥ १३ ॥ संभुज्यमानाघफलंहिपार्थिवप्रमादतोऽपीहनृणांकदाचन ॥ स्नानंहिमाघस्ययतःप्रसज्यतेतदैवतत्संक्षयमेतिनिश्चितम् ॥ १४ ॥ गन्धर्वकन्यापृथिवीशशापजंसंभुज्यमानाघफलंदुरत्ययम् ॥ स्नानाद्विमुक्ताःखलुमाघमासजाद्वाक्यात्पुरालोमशजातमद्भुतम् ॥ १५ ॥ सूतउवाच ॥ श्रुत्वैतत्पार्थिवःप्रीत्यानत्वातत्पादपङ्कजम् ॥ श्रद्धयापरयानम्रस्तंपप्रच्छपुरोधसम् ॥ १६ ॥ भगवन्ब्रूहिकन्याभिःशापोह्यभिगतः कुतः ॥ कस्यापत्यानितास्तासांनामकिंकीदृशंवयः ॥ १७ ॥ कथंलोमशवाक्येनविपाकाच्छापसंभवात् ॥ विमुक्ताःकुत्रताःसस्नुर्मासंताः

---

१ 'दिनानि सप्तापि च पञ्चमानवाः' इ० पा० । २ 'वस्त्राग्निकाञ्चनम्' इ० पा० । ३ 'शीतमयेश्च माघके:' इ० पा० ।

कतिसङ्ख्यया ॥१८॥ वसिष्ठउवाच ॥ श्रूयतांराजशार्दूलधर्मगर्भाकथापरा ॥ यथारणिर्वह्निगर्भाधर्मसूर्वह्निसूरिव ॥ १९ ॥ गन्धर्वःसुखसंगीतिस्त स्यकन्याप्रमोदिनी ॥ सुशीलस्यसुशीलाचसुस्वरास्वरवेदिनः ॥ २० ॥ सुताराचन्द्रकान्तस्यचन्द्रिकासुप्रभस्यच ॥ इमानिवरनामानितासामप्स रसांनृप ॥ २१ ॥ कुमार्यःपञ्चसर्वास्तावयसासुसमाःपुनः ॥ चन्द्रादिवविनिष्कान्ताश्चन्द्रिकेवसमुज्ज्वलाः ॥ २२ ॥ चन्द्राननाःसुकेशिन्यश्चन्द्रा मृतरसाधराः ॥ नेत्रेष्वानन्दकारिण्यःकौमुदीकुमुदेष्विव ॥ २३ ॥ लावण्यपिण्डसंभूताश्चारुरूपामनोहराः ॥ उद्भिन्नकुचकुम्भिन्यःपद्मिन्यइवमाधवे ॥ २४ ॥ उन्मील्ययौवनंकान्तंवल्लीवनवपल्लवैः ॥ हेमगौराश्चहेमाभाहेमालङ्कारभूषिताः ॥ २५ ॥ हेमचम्पकमालिन्योहेमच्छविसुवाससः ॥ स्वरग्रामावलीहासुविविधामूर्छनासुच ॥ २६ ॥ तालदानविनोदेषुवेणुवीणाप्रवादने ॥ मृदङ्गनादसंभिन्नंलास्यमार्गलवेषुच ॥ २७ ॥ चित्रादिषुविनो देषुकलासुचविशारदाः ॥ एवंभूतास्तुताःकन्यामुमुहुःक्रीडनेवने ॥२८॥ पितृभिर्लालिताःसत्यश्चेरुश्चधनदालये ॥ कौतुकादेकदापञ्चमिलित्वामासि माधवे ॥ कन्यामन्दारपुष्पाणिविचिन्वन्त्योवनाद्वनम् ॥ २९॥ गौरींसमाराधयितुंवराङ्गनाःकदाचिदच्छोदसरोवरंययुः ॥ हेमाम्बुजानिप्रवराणिताः पुनस्तस्मादुपादायवरोत्पलैःसह ॥ ३० ॥ वैडूर्यशुद्धस्फटिकाच्छविद्रुमेस्नात्वातडागेपरिधायचाम्बरम् ॥ मौनेनचस्थण्डिलपिण्डिकामयींस्वर्णस्य सिक्ताभिरुमांविनिर्ममुः ॥ ३१ ॥ समार्चितांचन्दनचन्द्रकुङ्कुमैरभ्यर्च्यगौरींवरपङ्कजादिभिः ॥ नानोपचरैश्चसुभक्तिभावितास्तालप्रयोगैर्ननृतुः कुमारिकाः ॥ ३२ ॥ गान्धारमाश्रित्यवरंस्वरंततोगेयंसुतारध्वनिभिःसुमूर्छितम् ॥ एणीदृशस्ताःप्रजगुःकलाक्षरंचारुप्रबन्धंगतिभिस्तुसुस्वरम् ॥ ३३ ॥ तस्मिन्सुनादेरसवर्षहर्षदेकन्यास्वलंनिर्भरनृत्यवृत्तिषु ॥ अच्छोदतीर्थप्रवरेतदागतःस्नातुंमुनेर्वेदनिधेःसुताग्रिपः ॥ ३४ ॥ रूपेणनिःसीम तरोवराननःसरोजपत्रायतलोचनोयुवा ॥ विशालवक्षाःसुभुजोऽतिसुन्दरःश्यामच्छविःकामइवापरोहिसः ॥ ३५ ॥ सब्रह्मचारीसशिखोविराज तेदण्डेनयुक्तोधनुषेवमन्मथः ॥ एणाजिनप्रावरणःसुसूत्रधृद्धेमाभमौञ्जीकटिसूत्रमेखलः ॥ ३६ ॥ तंदृष्ट्वाब्राह्मणंबालास्तास्तत्रसरसस्तटे ॥ जहृषुःकौतुकाविष्टाःकोऽयंनोनयनातिथिः ॥ ३७ ॥ सन्त्यक्तनत्यगीतास्तास्तस्यालोकनतत्पराः ॥ हरिण्योलुब्धकेनेवविद्धाःकामेनसाय कैः ॥ ३८ ॥ पश्यपश्येतिजल्पन्त्योमुग्धाःपञ्चससंभ्रमम् ॥ तस्मिन्विप्रवरेयूनिकामदेवभ्रमंययुः ॥ ३९ ॥ पुनःपुनस्तमभ्यर्च्य नयनैःपङ्कजैरिव ॥ पश्चाद्विचारयामासुस्ताश्चकन्याःपरस्परम् ॥ ४० ॥ यद्ययंकामदेवोहिरतिहीनःकथंव्रजेत् ॥ अथायमश्विनौदेवौतौ नूनंयुग्मचारिणौ ॥ ४१ ॥ गन्धर्वःकिन्नरोवाथसिद्धोवाकामरूपधृत् ॥ ऋषिपुत्रोऽथवाकश्चित्कश्चिद्वामानुषोत्तमः ॥ ४२ ॥

अस्तुवाकश्चिदेवायंधात्रासृष्टोऽहिनःकृते ॥ यथाभाग्यवतामर्थेनिधानंपूर्वकर्मभिः ॥४३॥ तथास्माकंकुमारीणांगौर्यानीतोवरोत्तमः ॥ करुणाजलकल्लो
लप्लुवार्द्रीकृतचित्तया ॥ ४४ ॥ मयावृतस्त्वयाचायंत्वयावृतस्तथामया ॥ एवंपञ्चसुकन्यासुवदन्तीषुनृपोत्तम ॥ ४५ ॥ श्रुत्वातद्वचनंतत्र
कृत्वामाध्याह्निकीःक्रियाः॥आलोच्यहृदयेसोऽपिविघ्नमेतदुपस्थितम्॥४६॥ब्रह्मविष्णुगिरिशादयःसुरायेचसिद्धमुनयःपुरातनाः॥ तेऽपियोगबलिनो
विमोहितालीलयातदबलाभिरद्भुतम्॥४७॥योषितांनयनतीक्ष्णसायकैर्भ्रूलतासुदृढचापनिर्गतैः॥धन्विनामकरकेतुनाहतःकस्यनोपततिहामनोमृगः ॥
॥४८॥तावदेवनयधीर्विराजतेतावदेवजनताभयंभजेत्॥तावदेवदृढचित्तताभृशंतावदेवगणनाकुलस्यच ॥४९॥ तावदेवतपसःप्रगल्भतातावदेवयमधार
णंनृणाम् ॥ यावदेववनितेक्षणबाणैर्मोहयन्त्युरुमदैर्नमानुषाः॥५०॥मोहयन्तुमदयन्तुरागिणोयोषितःसुललितैर्मनोहरैः ॥ मोहयन्तिमदयन्तिमामिमं
धर्मरक्षणपरंहिकैर्गुणैः॥ ५१ ॥ मांसशुक्रमलमूत्रनिर्मितेयोषितांवपुषिनिर्घृणेशुचौ ॥ कामिनश्चपरिकल्प्यचारुतांमारमन्तुसुविमूढचेतसः ॥ ५२ ॥
दारुणोहिपरिकीर्तितोऽङ्गनासन्निधिर्विमलबुद्धिभिर्बुधैः ॥ यावदत्रनसमीपगाइमास्तावदेवहिगृहंव्रजाम्यहम् ॥५३॥ समीपंतस्ययावद्धिनागच्छन्ति
वराङ्गनाः ॥ वैष्णवेनप्रभावेणतावदन्तर्दधेद्विजः ॥ ५४ ॥ तस्ययोगबलाद्रूपगतस्यादर्शनंतदा ॥ दृष्ट्वातदद्भुतंकर्मऋषिपुत्रस्यधीमतः ॥ ५५ ॥
वित्रस्तनयनाबालाःकुरङ्ग्यइवकातराः ॥ संभ्रान्तनयनाःशून्यादहशुस्तादिशोदश॥५६॥इन्द्रजालंस्फुटंवेत्तिमायांजानातिवापुनः॥दृष्टोऽप्ययंदृष्टरूपो
ऽभूदित्यूचुश्चपरस्परम्॥५७॥व्याप्तंतुहृदयंतासांसदैवविरहाग्निना ॥ ज्वलद्दावानलेनेवसुस्निग्धंसान्द्रकाननम् ॥५८॥ त्यक्त्वैन्द्रजालिकींविद्यांकान्त
दर्शयसत्वरम् ॥ स्वात्मानंनोमनोयुक्तंप्राग्ग्रासेमक्षिकोपमम् ॥ ५९ ॥ हाकष्टंदर्शितःकस्माद्धात्रात्वंघटितःपुनः ॥ ज्ञातंमहानुसंतापहेतोर्नस्त्वंविनि
र्मितः॥६०॥कच्चित्तेनिर्दयंचेतःकच्चिदस्मासुनोमनः॥कच्चिद्धूर्तोऽसिहेकान्तकच्चिन्मुष्णासिनोमनः ॥६१॥ कच्चिन्नप्रत्ययोऽस्मासुकच्चिदस्मान्परीक्षसे॥
कच्चिन्नर्मकलाशीलःकच्चिन्मायाविशारदः॥६२॥कच्चिच्चित्तेप्रवेष्टुंचवेत्सिविज्ञानलाघवम्॥कच्चिन्निष्क्रमणोपायंनजानासिकुतःपुनः ॥६३॥ कच्चिद्विना
पराधंतुत्वमस्मासुप्रकुप्यसे॥कच्चिद्दुःखंविजानासिपरेषांविप्रलम्भजम् ॥६४॥त्वद्दर्शनंविनानूनंहृदयेश्वरसाम्प्रतम्॥नजीवामोऽथजीवामःपुनस्त्वद्दर्श
नाशया॥६५॥अस्मांश्चनयतत्रत्वंयत्रशीघ्रंगतोभवान्॥त्वद्दर्शनहरोधाताव्यदधादङ्कुरच्छिदम्॥६६॥सर्वथादर्शनंदेहिकारुण्यंभजसर्वथा ॥ पर्यंतंनप्रप
श्यन्तिसर्वथासज्जनाजनाः॥६७॥इत्थंविलप्यताःकन्याःप्रतीक्ष्यचबहुक्षणम्॥पितुर्भियागृहंगन्तुशीघ्रमारेभिरेगतिम् ॥६८॥ तत्प्रेमनिगडैर्बद्धाभृशंवि
रहविक्लवाः ॥ कथंचिद्धैर्यमालम्ब्यताःस्वंस्वंगृहमागताः ॥६९॥ आगत्यपतिताःसर्वाजलयन्त्रसमीपतः ॥ किमेतन्मातृभिःपृष्टाःकुतःकालात्ययोऽ

भवत् ॥ ७० ॥ कन्याऊचुः ॥ क्रीडन्त्यःकिन्नरीभिस्तुसार्धंसङ्गीतकंमुदा ॥ संस्थितास्तेननज्ञातंदिवसादिसरोवरे ॥ ७१ ॥ पथिश्रान्तावयंमातः
संतापस्तेननस्तनौ ॥ मोहेनमहतावक्तुंनकेनाप्युत्सहामहे ॥ ७२ ॥ इत्युक्त्वालुलुठुस्तत्रमणिभूमौकुमारिकाः ॥ आकारंगोपयन्त्यस्तासुग्धाजल्पन्ति
मातृभिः ॥ ७३॥ काचिन्नर्तयतिक्रीडामयूरंनमुदातदा ॥ नपाठयतितंकीरंपञ्जरेऽन्याकुतूहलात् ॥७४ ॥ लालयेन्नकुलंनान्यानोल्लासयतिसारिकाम् ॥
अपरातीवसंमुग्धानैवक्रीडतिसारसैः ॥ ७५ ॥ भेजिरेनविनोदांस्तारेमिरेनैवमन्दिरे ॥ ऊचिरेबान्धवैर्नालंवीणावाद्यंनचक्रिरे ॥ ७६ ॥ कल्प
द्रुमप्रसूनंयद्रसवत्तुसुधोपमम् ॥ मन्दारकुसुमामोदिनपपुर्मधुरंमधु ॥ ७७ ॥ योगिन्यइवताःकन्यानासाग्रन्यस्तलोचनाः ॥ अलक्ष्यध्यान
सन्तानाःपुरुषोत्तममानसाः ॥ ७८ ॥ चन्द्रकान्तमणिच्छन्नेस्रवद्वारिकणद्रवे ॥ क्षणंवातायनेस्थित्वाजलयन्त्रेक्षणंक्षणात् ॥ ७९ ॥ रचयन्ति
क्षणंशय्यांदीर्घिकाम्भोजिनीदलैः ॥ वीज्यमानाःसखीभिस्ताःशीतलैःकदलीदलैः ॥ ८० ॥ इत्थंयुगसमांरात्रिमन्वानास्तावरस्त्रियः ॥ कथंचि
द्धीरतांकृत्वाविह्वलाःसज्वराइव ॥ ८१ ॥ प्रातर्व्योममणिंदृष्ट्वामन्यमानाःस्वजीवितम् ॥ विज्ञाप्यमातरंस्वांस्वांगौरींपूजयितुंगताः ॥ ८२ ॥
स्नात्वातेनविधानेनपुष्पैर्धूपैर्यथातथा ॥ विधायपूजनंदेव्यागायन्त्यस्तत्रताःस्थिताः ॥ ८३ ॥ एतस्मिन्नन्तरेविप्रःस्नातुंसोऽपिसमागतः ॥
पित्राश्रमपदात्तस्मादच्छोदेचसरोवरे ॥ ८४ ॥ मित्रंदृष्ट्वेवरात्र्यन्तेनलिन्यइवकन्यकाः ॥ उत्फुल्लनयनाजातास्तंदृष्ट्वाब्रह्मचारिणम् ॥ ८५ ॥
गत्वातदैवताःकन्याःसमीपंब्रह्मचारिणः ॥ सव्यापसव्यबन्धेनभुजपाशंचचक्रिरे ॥ ८६ ॥ गतोऽसिधूर्तपूर्वेद्युर्गन्तुमद्यनशक्यते ॥ वृतस्त्वं
नूनमस्माभिर्नात्रतेऽस्तुविचारणा ॥ ८७ ॥ इत्युक्तोब्राह्मणःप्राहप्रहसन्बाहुपाशगः ॥ युष्माभिरुच्यतेभद्रमनुकूलंप्रियंवचः ॥ ८८ ॥
प्रथमाश्रमनिष्ठस्यकिंतुनाद्यापिमेव्रतम् ॥ वेदाभ्यसनशीलस्यपारंयातिगुरोःकुले ॥ ८९ ॥ आश्रमेयत्रयोधर्मोरक्षणीयःसपण्डितैः ॥ विवाहो
ऽयमतोमन्येनधर्मइतिकन्यकाः ॥ ९० ॥ आकर्ण्यतस्यवाक्यानितमूचुस्तावचस्ततः ॥ सकलध्वनिसोत्कण्ठाःकोकिलाइवमाधवे ॥ ९१ ॥
धर्मादर्थोऽर्थतःकामःकामाद्धर्मफलोदयः ॥ इत्येवनिश्चितंशास्त्रंवर्णयन्तिविपश्चितः ॥ ९२ ॥ सकामोधर्मबाहुल्यात्पुरस्तेसमुपागतः ॥ सेव्यतां
विविधैर्भोगैःस्वर्गभूमिरियंततः ॥ ९३ ॥ श्रुत्वातद्वचनंतासांप्राहगम्भीरयागिरा ॥ तथ्यंवोवचनंकिंतुसमाप्येहस्वकंव्रतम् ॥ ९४ ॥
प्राप्यानुज्ञांगुरोःसर्वंवैवाहंकर्मनान्यथा ॥ इत्युक्ताःपुनरूचुस्ताःस्फुटंमूढोऽसिसुन्दर ॥ ९५ ॥ दिव्यौषधंब्रह्मरसायनंचसिद्धिर्निधेःसाधुकला
वराङ्गनाः ॥ मन्त्रस्तथासिद्धिरसश्चधर्मतोनेमानिषेध्याःसुधियासमागताः ॥ ९६ ॥ कार्यंहिदैवाद्यदिसिद्धमागतंतस्मिन्नुपेक्षांनचयातिनीतिगः

यस्माद्दुपेक्षानपुनःफलप्रदातस्मान्नदीर्घीकरणंप्रशस्यते ॥ ९७ ॥ सान्द्रानुरागाःकुलजन्मनिर्मलाःस्नेहार्द्रचित्ताःसुगिरःस्वयंवराः ॥ कन्याः सुरूपाःखलुचारुयौवनाधन्यालभन्तेऽत्रनरास्तुनेतरे ॥ ९८ ॥ क्वस्वयंवरसुन्दर्यःक्वचायंतापसोबटुः ॥ दुर्घटस्यविधानेहिमन्येधातातिपण्डितः॥९९॥ तस्मादस्मानिदानींतुस्वीकुर्यान्मङ्गलंभवान् ॥ गान्धर्वेणविवाहेनह्यन्यथानोनजीवितम् ॥ १०० ॥ श्रुतवाक्यस्ततःप्राहब्राह्मणोधर्मवित्तमः ॥ भोमृगाक्ष्यःकथंत्याज्योधर्मोधर्मधनैर्नरैः ॥ १ ॥ धर्मश्चार्थश्चकामश्चमोक्षश्चैतच्चतुष्टयम् ॥ यथोक्तंसफलंज्ञेयंविपरीतंतुनिष्फलम् ॥ २ ॥ नाकालेऽहंव्रतीकुर्यामतोदारपरिग्रहम् ॥ नक्रियाफलमाप्नोतिक्रियाकालंनवेत्तियः ॥ ३ ॥ यतोधर्मविचारेऽस्मिन्प्रसक्तंमममानसम् ॥ तस्मा च्छृणुतहेकन्यानसमीहेस्वयंवरम् ॥ ४ ॥ एवंज्ञात्वाशयंतस्यसमीक्ष्यैताःपरस्परम् ॥ करात्करंविमुच्याथजग्राहाङ्घ्रीप्रमोदिनी ॥ ५ ॥ भुजौजगृहतुस्तस्यसुशीलासुस्वरातथा ॥ आलिलिङ्गसुताराचचुचुम्बेचन्द्रिकामुखम् ॥ ६ ॥ तथापिनिर्विकारोऽसौप्रलयानलसन्निभः ॥ शशापब्रह्मचारीताःक्रोधेनात्यन्तमूर्छितः ॥ ७ ॥ पिशाच्यइवमांलग्नास्तत्पिशाच्योभविष्यथ ॥ एवंतेनाशुशप्तास्तास्तंसंत्यज्यपुरःस्थिताः ॥ ८ ॥ किमेतच्चेष्टितंपापह्यनागसिजनेत्वया ॥ प्रियेकृत्येऽप्रियंकृत्वाधिक्तांधर्मज्ञतांतव ॥९॥ अनुरक्तेषुभक्तेषुमित्रेषुद्रोहकारिणः ॥ पुंसोलोकद्वयेसौख्यंनाशं यातीतिनःश्रुतम् ॥ ११० ॥ तस्मात्त्वमपिनःशापात्पिशाचोभवसत्वरम् ॥ इत्युक्त्वोपरताबालानिःश्वसन्त्यःक्षुधाकुलाः ॥ ११ ॥ तदाचान्योन्य संरम्भात्तस्मिन्सरसिपार्थिव ॥ ताःकन्याब्रह्मचारीससर्वेपैशाचमागताः ॥ १२ ॥ पिशाच्यःसपिशाचश्चक्रन्दमानाःसुदारुणम् ॥ क्षपयन्ति विपाकंतंपूर्वोपात्तस्यकर्मणः ॥ १३ ॥ स्वकालेतुफलत्येवपूर्वोपात्तंशुभाशुभम् ॥ स्वच्छायावच्चदुर्वारंदेवानामपिपार्थिव ॥ १४ ॥ क्रन्दन्ति पितरस्तासांमातरस्तत्रतस्यच ॥ अप्रमादश्चबालानांदवहिदुरतिक्रमम् ॥ १५ ॥ ततऊर्ध्वपिशाचास्तेआहारार्थेसुदुःखिताः ॥ इतस्ततश्चधावन्तो वसन्तिसरसस्तटे ॥ १६ ॥ एवंबहुतिथेकालेलोमशोमुनिसत्तमः ॥ पौषेमासिचतुर्दश्यामच्छोदेस्नातुमागतः ॥ १७ ॥ दृष्ट्वातंब्राह्मणंसर्वे पिशाचाःक्षुत्समाकुलाः ॥ धावन्तोहन्तुकामास्तेमिलित्वायूथवर्तिनः ॥ १८ ॥ दह्यमानाःसुतीव्रेणतेजसालोमशस्यच ॥ असमर्थाःपुरः स्थातुंसर्वेतेदूरतःस्थिताः ॥ १९ ॥ तत्रवेदनिधिर्विप्रस्तदैवहिसमागतः ॥ समीक्ष्यलोमशंराजन्साष्टाङ्गंप्रणिपत्यसः ॥ १२० ॥ उवाचसूनृतां वाचंबद्ध्वाशिरसिचाञ्जलिम् ॥ महाभाग्योदयेविप्रसाधूनांसंगतिर्भवेत् ॥ २१ ॥ गङ्गादिसर्वतीर्थेषुयोनरःस्नातिसर्वदा ॥ यःकरोतिसतांसङ्गं तयोःसत्संगतिर्वरा ॥ २२ ॥ गुरूणांसंगमोविप्रदृष्टादृष्टफलोभुवि ॥ स्वर्गदोरोगहारीचाकिंतुसोपवर्गदोमतः ॥ २३ ॥ इत्युक्त्वाकथयामास

पूर्ववृत्तान्तमद्भुतम् ॥ इमागन्धर्वकन्यास्ताबटुःसोऽयंममात्मजः ॥ २४ ॥ सर्वेपिशाचरूपेणमिथःशापविमोहिताः ॥ दीनाननास्तुतिष्ठन्तित
वाग्रेमुनिसत्तम ॥ २५ ॥ त्वद्दर्शनेनबालानांनिस्तारोऽद्यभविष्यति ॥ सूर्योदयेतमःस्तोमःकिंनलीयेतगह्वरे ॥ २६ ॥ श्रुत्वातल्लोमशोराज
न्कृपार्द्रीकृतमानसः ॥ प्रत्युवाचमहातेजास्तंमुनिंपुत्रदुःखितम् ॥ २७ ॥ मत्प्रसादाच्चबालानांस्मृतिःसपदिजायताम् ॥ धर्मंचवच्मितंयेनमिथः
शापोलयंव्रजेत् ॥२८॥ वेदनिधिरुवाच ॥ महर्षेकथ्यतांधर्मोमुच्यन्तेयेनबालकाः॥नायंकालोविलम्बस्यशापाग्निर्दारुणोयतः ॥२९॥ लोमशउवाच॥
मयासार्धंप्रकुर्वन्तुमाघस्नानंविधानतः ॥ शापान्मुञ्चन्तिमाघान्तेनान्यथानिष्कृतिर्भवेत् ॥ १३० ॥ शापःपापफलंविप्रपापनाशोभवेन्नृणाम् ॥ माघ
स्नानेनतीर्थेचइतिमेनिश्चितामतिः ॥ ३१ ॥ सप्तजन्मकृतंपापंवर्तमानंचपातकम् ॥ माघस्नानंदहेत्सर्वंपुण्यतीर्थेविशेषतः॥३२॥प्रायश्चित्तंनपश्यन्ति
यस्मिन्पापेमुनीश्वराः ॥ पातकंपुण्यतीर्थेषुनश्येत्तदपिमाघतः ॥ ३३ ॥ ज्ञानकृन्मानसेमाघस्तस्मान्मोक्षफलप्रदः ॥ हिमवत्पृष्ठतीर्थेषुसर्वपापप्रणा
शनः ॥ ३४ ॥ इन्द्रलोकप्रदोऽच्छोदेनिर्दिष्टोवेदवादिभिः ॥ सर्वपापहरोमाघोमोक्षदोबदरीवने ॥ ३५ ॥ पापहादुःखहारीचसर्वकामफलप्रदः ॥ रुद्र
लोकप्रदोमाघोनार्मदेपापनाशनः ॥ ३६ ॥ यामुनःसूर्यलोकायभवेत्कल्मषनाशनः ॥ सारस्वतोऽघविध्वंसीब्रह्मलोकफलप्रदः ॥३७॥ विशालफलदो
माघोविशालायांद्विजोत्तम ॥ पातकेन्धनदावाग्निर्गर्भहेतुक्रियापहः ॥ ३८ ॥ विष्णुलोकायमोक्षायजाह्नवःपरिकीर्तितः ॥ सरयूगण्डकीसिन्धुश्चन्द्र
भागाचकौशिकी ॥ ३९ ॥ तापीगोदावरीभीमापयोष्णीकृष्णवेणिका ॥ कावेरीतुङ्गभद्राचअन्यायाश्चसमुद्रगाः ॥१४०॥आशुमाघीनरोयातिस्वर्ग
लोकंविकल्मषः ॥ नैमिषेविष्णुसायुज्यंपुष्करेब्रह्मणोऽन्तिकम् ॥ ४१ ॥ आखण्डलस्यलोकोहिकुरुक्षेत्रेतुमाघतः ॥ माघोदेवह्रदेविप्रयोगसिद्धिफल
प्रदः ॥ ४२ ॥ प्रभासेमकरादित्येस्नानाद्रुद्रगणोभवेत् ॥ देवक्यांदेवतादेहोनरोभवतिमाघतः ॥ ४३ ॥ माघस्नानेनभोविप्रगोमत्यांनपुनर्भवः ॥ हेम
कूटेमहाकालओङ्कारेचामरेश्वरे ॥ ४४ ॥ नीलकण्ठेऽर्बुदेमाघाद्रुद्रलोकेमहीयते ॥ सर्वासांसरितांविप्रसंगमेमकरेरवौ ॥ ४५ ॥ स्नानेनसर्वकामाना
मवाप्तिर्जायतेनृणाम् ॥ माघस्तुप्राप्यतेधन्यैःप्रयागेद्विजसत्तम ॥ अपुनर्भवदंतत्रसितासितजलंयतः ॥ ४६ ॥गायन्तिदेवाःसततंदिविष्ठामाघःप्रयागे
किलनोभविष्यति ॥ स्नानान्नरायत्रनगर्भवेदनांपश्यन्तितिष्ठन्तिचविष्णुसन्निधौ॥ ४७ ॥मज्जन्तियेऽपित्र्यहमत्रमानवास्तीर्थेप्रयागेबहुपापकञ्चुकाः॥
व्रजन्तितेनोनिरयेषुधर्मिणःस्वर्गेशुभेचारुचरन्तिदेववत् ॥ ४८ ॥ तीर्थैर्व्रतैर्दानतपोभिरध्वरैःसार्धंविधात्रातुलयाधृतंपुरः ॥ माघेप्रयागस्य

तयोर्द्वयोरभून्माघोगरीयानतएवसोऽधिकः ॥ ४९ ॥ वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसंचितैः ॥ योगैश्चसंयान्तिनरानतांगतिंस्नानेन माघस्यहियान्तियांगतिम् ॥१५०॥ स्नाताश्चयेमकरभास्करोदयेतीर्थेप्रयागेसुरसिन्धुसंगमे ॥ तेषांगृहद्वारमलङ्करोतिकिंभृङ्गावलिःकुञ्जरकर्णताडिता ॥५१॥योराजसूयाद्धयमेधयज्ञतःस्नानात्फलंसंप्रददातिचाधिकम् ॥ पापानिसर्वाणिविलोप्यलीलयानूनंप्रयागःसकथंनसेव्यते॥५२॥अवन्तिविषये राजावीरसेनोऽभवत्पुरा ॥ नर्मदातीरमागत्यराजसूयंचकारसः ॥ ५३ ॥ षोडशैरश्वमेधैश्चस्वर्णवाटविराजितैः ॥ स्वर्णभूषणयूपाढ्यैरीजेसोऽपियथा विधि ॥ ५४ ॥ प्रददौधान्यराशींश्चद्विजेभ्यःपर्वतोपमान् ॥ वदान्योदेवताभक्तोगोप्रदःससुवर्णदः ॥ ५५ ॥ ब्राह्मणोभद्रकोनाममूर्खोहिनकुलस्तथा ॥ कृषीवलोदुराचारःसर्वधर्मबहिष्कृतः ॥ ५६ ॥ कृषिकर्मसमुद्विग्नोबन्धुभिश्चार्ष्यसंस्कृतः ॥ इतस्ततःपरिभ्रम्यनिर्गतःक्षुत्प्रपीडितः ॥ ५७ ॥ दैवतःसार्थमाविश्यप्रयागंससमागतः ॥ महामाघींपुरस्कृत्यसस्नौतत्रदिनत्रयम् ॥ ५८ ॥ अनघःस्नानमात्रेणभूत्वेहसद्विजोत्तमः ॥ प्रयागाच्चलित स्तत्रपुनर्यस्मात्समागतः ॥ ५९ ॥ सराजासोऽपिविप्रश्चविपन्नावेकदातदा ॥ तयोर्गतिःसमादृष्टामयाशक्रस्यसन्निधौ ॥ ६० ॥ तेजोरूपंबलंत्रैणंदे वयानंविभूषणम् ॥ पारिजातमयीमालानृत्यंगीतंतयोःसमम् ॥ ६१ ॥ इतिदृष्टंहिमाहात्म्यंक्षेत्रस्यकथमुच्यते ॥ माघःसितासितेविप्रराजसूयैःसमो मतः ॥ ६२॥ धनुस्त्रिशतविस्तीर्णेसितनीलाम्बुसंगमे ॥ अपुनरावृत्तिर्माघीराजसूयीपुनर्भवेत् ॥ ६३ ॥ माघमासिकवातोऽपिसितासितजलंस्पृशेत्॥ अधर्म्यंनस्पृशेन्नूनंमहापातकहाहिसः ॥ ६४ ॥ किमत्रबहुनोक्तेनश्रूयतांनिश्चितंद्विज ॥ समुद्धृतफलंपापंतीर्थेमाघःप्रणाशयेत् ॥ ६५ ॥ अत्रते कथयिष्यामिसावधानमतिःशृणु ॥ ( पिशाचमोचनंनामइतिहासंपुरातनम् ॥शृण्वन्त्वप्सरसोबालाःशृणोतुत्वत्सुतस्तथा ॥ मत्प्रसादात्स्मृतिंलब्ध्वा पैशाच्यान्मुक्तिकामिनः ॥ १ ॥ ) पुरादेवद्युतिर्विप्रोवैष्णवोवेदपारगः ॥६६ ॥ पिशाचान्मोचयामासकरुणाप्लुतमानसः ॥ ६७ ॥ दिलीपउवाच॥ कुत्रस्थितःकस्यपुत्रोनियमःकोऽस्यवाजपः ॥ केनवावैष्णवोवृत्तःकेपिशाचाश्चमोचिताः ॥ ६८ ॥ एतद्विस्तरतःसर्वंकीर्तयस्वमहामुने ॥ कौतूहलं महापुण्यंशृणुमस्त्वत्प्रसादतः ॥ ६९ ॥ वसिष्ठउवाच ॥ प्लक्षप्रस्रवणेपुण्येसरस्वत्यास्तटेशुभे ॥ तत्राश्रमपदंतस्यशैलमाश्रित्यशोभनम् ॥ ॥ १७० ॥ शालैस्तालैस्तमालैश्चबिल्वैर्बकुलपाटलैः ॥ तिन्तिडीचिरिबिल्वैश्चचूतचम्पककाञ्चनैः ॥ ७१ ॥ करञ्जैःकोविदारैश्चकेसरैःकुञ्जराशनैः ॥ नतिलकैःकर्णिकारैश्चकुम्भैःखादिरतिन्दुकैः ॥ ७२ ॥ वासीरैःसाल्वजम्बीरैःपीलूदुम्बरवेतसैः ॥ शाकोटैरटरूषैश्चकरहाटैर्वटद्रुमैः ॥ ७३ ॥घोण्टाकुट

१ 'स्नानात्प्रयागस्य हि यान्ति यां गतिम्'इ० पा० । २ 'स्नाता नरा ये भृगुभास्करोदये' इ० पा० । ३ 'स्वराडिव विराजते' इ० पा० । ४ 'बहुद्विर' इ० पा० ।

जपालाशैरशोकैःशोकहारिभिः ॥ जम्बूनिम्बकदम्बैश्चक्षीरिकाकरमर्दकैः ॥७४॥ बीजपूरैःसनारिङ्गैरम्भाराजिविराजितैः॥ पनसैरसवद्भिश्चनारिकेलैः
सदाफलैः ॥ ७५ ॥ सप्तच्छदैस्त्रिपत्रैश्चशिरीषामलकैःशुभैः ॥ कर्कन्धूलकुचैरक्षैःपारिभद्रैर्वचादिभिः ॥७६॥ केतकैःसिन्दुवारैश्चतगरैःकुन्दमल्लिकैः ॥
पद्मेन्दीवरकह्लारमालतीयूथिकादिभिः ॥ ७७ ॥ मालतीमोगरैश्चैवजातीफलविराजितैः ॥ पुन्नागैःकिंशुकैश्चैवबर्बरीतुलसीद्रुमैः ॥ ७८ ॥
आश्रमोरमणीयःसद्रुमैर्नानाविधैर्नृप ॥ वनमध्येनदीयातिपुण्यतोयासरस्वती ॥७९॥ कूजन्तिसारसास्तत्रमदस्निग्धकलंसदा ॥ नदन्तिकोकिलाः
शब्दंगुञ्जन्तिचमधुव्रताः ॥ १८० ॥ बहुकोलाहलंभूपतद्वनंशुकसारिभिः ॥ चरन्तिश्वापदास्तत्रविविधाःकाननोत्तमे ॥८१॥ सदाफलंसदापुष्पंपराग
कणधूसरम् ॥ आच्छन्नंकाननंसर्वंमधुवृक्षैःसमन्ततः ॥ ८२ ॥ नवपल्लवसंजातमञ्जरीभरवल्लिभिः ॥ आश्लिष्टमभितोरम्यंप्रियाभिरिववल्लभः ॥
॥ ८३ ॥ तस्यशापभयात्त्रस्तोवातोवातिसमन्ततः ॥ नवर्षन्त्यश्मभिर्मेघानशोषयतिभास्करः ॥ ८४ ॥ वनंनोपद्रवंतद्धिसदासिद्धनिषेवितम् ॥
आह्लादजनकंनित्यंवनंचैत्ररथंयथा ॥ ८५ ॥ तस्मिन्वसतिधर्मात्मादेवद्युतिर्द्विजोत्तमः ॥ पुत्रःसुमित्रोविप्रस्यलब्धोलक्ष्मीपतेर्वरात् ॥८६॥ नियमः
श्रूयतांतस्यसर्वदानियतात्मनः ॥ ग्रीष्मेपञ्चतपानित्यंसूर्यन्यस्तविलोचनः ॥८७॥ वर्षत्कादम्बिनीयावद्वर्षास्वभ्रावकाशगः ॥ वातेप्रवातेनिष्कम्पो
दुःसहोहिमवानिव ॥ ८८ ॥ वसत्यप्सुसहेमन्तेह्रदेसारस्वतेद्विज ॥ उपस्पृशतिकालेसत्रिवारंवारिनिर्मलम् ॥ ८९ ॥ पितॄन्देवानृषीन्नित्यंसं
तर्पयतिश्रद्धया ॥ ब्रह्मयज्ञपरोनित्यंसत्यवादीजितेन्द्रियः ॥ १९० ॥ भूमौविश्रम्यविश्रान्तःप्रदध्यौप्रार्थयन्हरिम् ॥ वन्यैर्जुहोत्यग्निहोत्रंश्रद्धया
तिथिपूजकः ॥ ९१ ॥ चान्द्रायणविधानेनकालंनयतिसर्वदा ॥ स्वयंविगलितैःपत्रैःफलैर्वृत्तिसमीहते ॥ ९२ ॥ अनुद्विग्नस्तपोनिष्ठोवेद
वेदाङ्गपारगः ॥ धमनीविकरालोऽसावस्थिमात्रकलेवरः ॥ ९३ ॥ इत्थंजगामवर्षाणांसहस्रंतस्यकानने ॥ तदाजज्वालशैलोऽसौतपसस्तस्य
तेजसा ॥ ९४ ॥ सोढुंनशक्यतेभूतैस्तेजस्तस्यमहात्मनः ॥ वैश्वानरइवाभातिप्रज्वलंस्तपसाद्विज ॥ ९५ ॥ गतवैराणिभूतानिसमजायन्त
तद्वने ॥ मृगव्याघ्राखुमार्जारामिथःक्रीडन्तिनिर्भयाः ॥ ९६ ॥ अन्योऽपिनियमस्तस्यश्रूयतामतिदुर्लभः ॥ नारायणंत्रिकालंससंपू
जयतिनित्यशः ॥ ९७ ॥ पुष्पाणांतुसहस्रेणविकचेनसुगन्धिना ॥ वेदसूक्तविधानेनविष्णुध्यानपरायणः ॥ ९८ ॥ विष्णोतःसम्प्री
येविप्रःकुरुतेकर्मचाखिलम् ॥ दधीचेर्वरदानात्ससंजातोवरवैष्णवः ॥ ९९ ॥ एकदामासिवैशाखएकादश्यांमहामुनिः ॥ पूजांकृत्वाहरेरम्यां

१ 'त्रस्ता गङ्गावाताः प्रवान्ति न' इ० पा० ।

विचित्रामकरोत्स्तुतिम् ॥ २०० ॥ तदैवखगमारुह्यदेवदेवोहरिःस्वयम् ॥ आजगामपुरस्तस्यतयास्तुत्यातिहर्षितः ॥ १ ॥ तंदृष्ट्वागरुडा रूढंप्रत्यक्षंजलदच्छविम् ॥ चतुर्बाहुंविशालाक्षंसर्वालङ्कारभूषितम् ॥ २ ॥ उद्भूतपुलकोविप्रःसानन्दजललोचनः ॥ जगामशिरसाभूमौकृतकृत्यमना स्तदा ॥ ३ ॥ नममौतेनहर्षेणसब्रह्माण्डोदरेऽपिहि ॥ नसस्मारनिजंदेहंब्रह्मभूतइवाभवत् ॥ ४ ॥ ततःसंभाषितःप्रीत्याहरिणावैष्णवोमुनिः ॥ देवद्युतेविजानामिमद्भक्तस्त्वंमदाश्रयः ॥५॥ संन्यस्ताखिलकर्मासिमद्भावोमन्मनाःसदा ॥ वरंब्रूहिप्रसन्नोऽस्मिस्तोत्रेणानेनचानघ ॥६॥ इतिश्रुत्वा हरेर्वाक्यंप्रत्युवाचसतापसः ॥ देवदेवारविन्दाक्षस्वमायाधृतविग्रह॥७॥त्वद्दर्शनात्सदादेवदुर्लभोनापरोवरः ॥ब्रह्मादयःसुराःसर्वेयोगिनःसनकादयः॥ ॥ ८॥ त्वांसाक्षात्कर्तुमिच्छन्तिसिद्धाश्चकपिलादयः ॥ अहंममेतिपाशायेमोहलोभाःशुभाशुभाः॥९॥सहेतुकाश्चदह्यन्तेदृष्टेत्वयिपरावरे ॥ जन्मनः कर्मणोवुद्धेराविर्भूतंफलंमम ॥ २१० ॥ यद्दृष्टोऽसिजगन्नाथप्रार्थयेकिमतःपरम् ॥ नवरार्थंहिदेवेशत्वत्पादपङ्कजंहृदि ॥ ११ ॥ चिन्तयामि सदाभक्त्यात्वद्गतेनान्तरात्मना ॥ इममेववरंयाचेत्वद्भक्तिरचलामम ॥१२॥ अस्तुवैकमलानाथप्रार्थयेनापरंवरम् ॥ इतिश्रुत्वावचस्तस्यप्रसन्नवदनो हरिः ॥१३ ॥ प्रत्युवाचप्रसन्नात्माएवमस्तुद्विजोत्तम ॥ अन्यस्तेतपसःकश्चित्प्रत्यूहोनभविष्यति ॥ १४॥ एतच्चत्वत्कृतंस्तोत्रंयेपठिष्यन्तिमानवाः॥ तेषांमद्विषयाभक्तिर्निश्चलाचभविष्यति ॥ १५ ॥ धर्मकार्यंचयत्किंचित्साङ्गंसर्वंभविष्यति ॥ ज्ञानेचपरमानिष्ठातेषांस्थास्यति निश्चला ॥ १६ ॥ इत्युक्त्वान्तर्हितस्तत्रदेवदेवोजनार्दनः ॥ देवद्युतिस्तदारभ्यनारायणपरोऽभवत् ॥ १७ ॥ दिलीपउवाच ॥ महर्षेऽनुगृहीतोऽस्मि कथयापावनीकृतः ॥ अनयाविष्णुसंगत्यागङ्गयेवाहमद्यवै॥१८॥किंतुस्तोत्रंसमाख्याहिप्रसन्नोयेनमाधवः ॥ तस्यानघस्यविप्रस्यमहत्कौतूहलंमम॥ ॥ १९॥त्वत्प्रसादादहंविप्रमन्येप्राप्तंमनोरथम् ॥ महतांसंगतिःकस्यमहत्त्वायनकल्पते॥२२०॥कथयस्वप्रसादेनविष्णोःस्तोत्रमनुत्तमम् ॥ येनतुष्टःस भगवान्ददौतस्यचदर्शनम् ॥ २१ ॥ वसिष्ठउवाच ॥ कथयामिरहस्यंतेयज्जतंस्तोत्रमुत्तमम् ॥ प्राग्गृहीतंसुपर्णेनगरुडान्मयिचागतम् ॥ २२ ॥ अध्यात्मगर्भसारंतन्महोदयकरंशुभम् ॥ सर्वपापहरंभूपस्वात्मज्ञानकरंपरम् ॥ २३ ॥ ओंनमोवासुदेवायनमोविश्वायचक्रिणे ॥ भक्त प्रियायकृष्णायजगन्नाथायशार्ङ्गिणे ॥ २४ ॥ स्तोतास्तुत्यःस्तुतिःसर्वंजगद्विष्णुमयंयदा ॥ तदासंस्तूयतेकेनभक्तिर्मोदकरीनृणाम् ॥ २५ ॥ यस्यदेवस्यनिःश्वासोवेदाःसाङ्गाःससूत्रकाः ॥ कास्तुतिःप्रमुदेतस्यभक्त्याहंमुखरोऽभवम् ॥ २६ ॥ चक्रवद्भ्रमतेसर्वंत्रैलोक्यंसचराचरम् ॥ अतस्त्वं

१ 'देहस्य मोहमूलाः शुभाशुभाः' इ० पा०।

गीयतेदेवचक्रपाणिवरायुध ॥ २७॥ वेदोनवक्तियंसाक्षान्नचवाग्वेत्तिनोमनः ॥ मद्विधस्तंकथंस्तौतिभक्तिमान्वाकथंभवेत् ॥ २८॥ ब्रह्मादिब्रह्मविष्णुस्त्वंत्वमेवसकलाश्रयः ॥ स्रष्टाब्रह्मनिदानंचशुद्धंब्रह्मत्वमेवच ॥२९॥ (कोऽयंकायस्तवविभोभित्त्वास्पृशतिकायिनम् ॥ कायदोषैर्नचाघ्रातोनमस्तस्मैतुयोगिने ॥ १ ॥) देवभावेनजागर्तिनननिद्रातिनिजात्मनि ॥ सुखसंदोहबुद्धिर्यासात्वंविष्णोनसंशयः ॥ २३० ॥ महदादयोमहाभावास्तथावैकारिकागुणाः ॥ त्वमेवनाथतत्सर्वंनानात्वंमूढकल्पना ॥३१॥ केशकेशवरूपाभिःकल्पनातिसृभिस्तथा ॥ त्वमेवकल्पसेब्रह्मपुमानिवसुतादिभिः॥ ॥ ३२ ॥ विदोषंविगुणंचैकंचिन्मूर्तिरखिलंजगत् ॥ कवीनांभातियत्तत्त्वंतंविष्णुंनौमिनिर्मलम् ॥ ३३ ॥ यस्यज्ञानेनकुर्वन्तिकर्मापिश्रुतिभाषितम् ॥ निरीषणाजगन्मित्राःशुद्धंब्रह्मनमामितंव ॥ ३४ ॥ ध्वंस्तेतरच्चसन्मात्रंयत्प्रबोधादुपासते ॥ योगिनःसर्वभूतेषुसद्रूपंनौमितंहरिम् ॥ ३५ ॥ ब्रह्माहमितिगायन्तियंज्ञात्वैकंवराद्विजाः ॥ पश्यन्तोहित्वयातुल्यंदेवंतंनौमिमाधवम् ॥ ३६ ॥ माययामोहवैचित्र्यंतथाहंममतांनृणाम् ॥ योनाशयतिपापौघान्नमस्तस्मैचिदात्मने ॥ ३७ ॥ प्रयाणेवाप्रयाणेचयन्नामस्मरतांनृणाम् ॥ सद्योनश्यन्तिपापौघानमस्तस्मैचिदात्मने ॥ ३८ ॥ मोहानललसज्ज्वालाज्वलल्लोकेषुसर्वदा ॥ यत्पादाम्भोरुहच्छायांप्रविष्टश्चनदह्यते॥३९॥यस्यस्मरणमात्रेणनमोहोनैवदुर्गतिः॥नरोगानैवदुःखानितमनन्तंनमाम्यहम् ॥ २४० ॥ कामयन्तेप्रजानैवधिषणाभ्यःसमुत्थिताः ॥ लोकमात्मैवपश्यन्तियंबुद्धैकचराजनाः ॥ ४१ ॥ शब्दार्थःसंविदर्थश्चविष्णोर्नामपरोयदि ॥ सत्येनतेनसंसारोमासंस्पृशतुमाधव ॥ ४२ ॥ नारायणोजगद्व्यापीयदिवेदादिसंमतः ॥ सत्यनतेननिर्विघ्नाविष्णुभक्तिर्ममास्तुवै॥ ॥ ४३ ॥ योनबीजंविनाबीजंबीजेयोबीजभावितः ॥ सविष्णुर्भवबीजंमेसितविद्यासिनार्वतु ॥ ४४ ॥ त्रितनुर्नटवद्यस्तुसृष्टिस्थितिलयेषुच ॥ गुणैर्भवतिकार्येषुसप्रसीदतुमेहरिः ॥ ४५ ॥ दशधेहावतीर्णोयोधर्मत्राणायकेवलम् ॥ अभ्यर्थितःसुरैःसर्वैःसप्रसीदतुमेहरिः ॥ ४६ ॥ ब्रह्मादिस्तम्बपर्यन्तंप्राणिहृन्मन्दिरेऽमलः ॥ एकोवसतियोदेवःसप्रसीदतुमेहरिः ॥ ४७ ॥ इच्छांचक्रेसदेवाग्रएकश्चैवबहुस्तथा ॥ प्रविष्टोदेवताःस्रष्टासप्रसीदतुमेहरिः ॥ ४८ ॥ हृत्खगःखसमःखादिःखातीतःखक्रियःखगः ॥ खंब्रह्माखादिभुक्चान्तेखमूर्तिस्त्वंमखाशनः ॥ ४९ ॥ यद्वासायन्मुदायस्यंमाययासृज्यतेजगत् ॥ जाडचंदुःखमसत्यंचसभवानेवतन्मयः ॥२५०॥ त्वत्सृष्टंमोदतेविश्वंत्वत्त्यक्तमशुचिर्भवेत ॥ दत्सङ्गतोऽप्यसङ्गस्त्वंविकारस्तेनतेनहि ॥५१॥भूतयोगजचैतन्यंचार्वाकायमुपासते ॥ सौगताब्रुवतेतर्कैस्त्वांबुद्धिक्षणभङ्गुराम् ॥५२ ॥ शरीरपरिमाणंत्वांमन्यन्तेजिनदेवताः॥ध्यायन्तिपुरुषं



१ 'महदादिद्विधा भावाः' इ०पा०। २ 'निरीक्षणे जगन्मित्रम्' इ०पा०। ३ 'सं ( स्वं ) स्वचरन्तं' इ०पा०। ४ 'दो अत्रखण्डन' लोऽयनु नाशरत्रित्यर्थः। ५ 'वनया सन्ततंजगत्' इ०पा०।

साङ्ख्यास्त्वामेवप्रकृतेःपरम् ॥ ५३ ॥ जन्मादिरहितः[1]पूर्वंयःस्यादानन्दलक्षणम् ॥ त्वामेवोपनिषद्ब्रह्मचिन्तयन्तिपरस्परम् ॥५४॥ खादिभूतानिदेह
श्चमनोबुद्धीन्द्रियाणिच ॥ विद्याविद्येत्वमेवात्रनान्यत्त्वत्तोऽस्तिकिंचन ॥ ५५ ॥ त्वंधातासर्वभूतानांत्वमेवशरणंमम ॥ त्वमग्निस्त्वंहविःशक्रोहोता
मन्त्रःक्रियाफलम् ॥५६॥ त्वमस्तिनास्तिवैकुण्ठत्वामहंशरणंगतः॥ त्वंकर्मफलदाताचदीक्षितानांक्रियाफलम् ॥ ५७॥ त्वंहेतुःसर्वभूतानांत्वमेवशरणं
मम॥युवतीनांयथायूनियूनांचयुवतौयथा॥५८॥मनोऽभिरमतेतद्वत्प्रीतिर्मेरमतांत्वयि ॥ अपिपापंदुराचारंनरंत्वत्प्रणतंहरे॥५९॥नेक्षन्तेकिङ्करायाम्या
उलूकास्तपनंयथा ॥ तापत्रयमघौघश्चतावत्पीडयतेजनम् ॥ २६० ॥ यावत्स्मरतिनोनाथभक्त्यात्वत्पादपङ्कजम् ॥६१॥ यंनस्पृशन्तिगुणजातिश
रीरधर्मायंनस्पृशन्तिगतयस्त्वखिलेन्द्रियाणाम् ॥ यंचस्पृशन्तिमुनयोगतसङ्गमोहास्तस्मैनमोभगवतेहरयेकरोमि ॥ ६२ ॥ स्थूलंविलाप्यक
रणेकरणंनिदानेतत्कारणंकरणकारणवर्जितेच ॥ इत्थंविलाप्यमुनयःप्रविशन्तितत्रतस्मैनमोऽस्तुहरयेमुनिसेविताय ॥ ६३ ॥ यद्ध्यानसंवहनघूर्णवशी
कृतान्तामैश्वर्यचारुगुणिनींसुखमोक्षलक्ष्मीम् ॥ आलिङ्ग्यशेरतइहात्मसुखैकभाजस्तस्मैनमोऽस्तुहरयेमुनिसेविताय ॥ ६४ ॥ जन्मादिभावविकृ
तेर्विरहस्वभावेयस्मिन्नयंपरिधुनोतिषडूर्मिवर्गः॥ यंतापयन्तिनसदामदनादिदोषास्तंवासुदेवममलंप्रणतोऽस्मिहार्दम्॥६५॥यद्ध्यानसङ्गतमलंविजहा
त्यविद्यांयद्ध्यानवह्निपतितंजगदेतिनाशम् ॥ यज्ज्ञानमुल्लसदसिद्यतिसंशयारिंतंत्वांहरिंविशदबोधघनंनमामि ॥ ६६ ॥ चराचराणिभूतानिसर्वा
णिचहरेर्वश ॥ यथात्रतेनसत्येनपुरस्तिष्ठतुमेहरिः ॥ ६७ ॥ यथानारायणःसर्वंजगत्स्थावरजङ्गमम् ॥ तेनसत्येनमेरूपंप्रदर्शयतुकेशवः॥६८॥
भक्तिर्यथाहरौमेऽस्तितद्वरिष्ठागुरौयदि ॥ ममास्तितेनसत्येनस्त्वंदर्शयतुकेशवः ॥ ६९ ॥ तस्यैवंशपथैःसत्यैर्भक्तितस्यानुचिन्तयन् ॥ दर्शया
मासचात्मानंसप्रीतःपुरुषोत्तमः ॥ २७० ॥ ततोदत्त्वावरंतस्यपूरयित्वामनोरथम् ॥ जगामकमलाकान्तःस्तुत्याविप्रेणतोषितः ॥ ७१ ॥ कृत
कृत्योद्विजःसोऽपिवासुदेवपरायणः ॥ शिष्यैःसार्धंजपन्स्तोत्रंनस्मिन्नास्तेतपोवने ॥ ७२ ॥ कीर्तयेद्यइदंस्तोत्रंशृणुयाद्योऽपिमानवः ॥ अश्वमे
धस्ययज्ञस्यप्राप्नोतिविपुलंफलम् ॥ ७३ ॥ आत्मविद्याप्रबोधंचलभतेब्राह्मणःसदा ॥ नपापेजायतेबुद्धिर्नैवपश्यत्यमङ्गलम् ॥ ७४ ॥ बुद्धिस्वा
स्थ्यंमनःस्वास्थ्यंस्वास्थ्यमैन्द्रियकंतथा ॥ नृणांभवतिसर्वेषामस्यस्तोत्रस्यकीर्तनात् ॥ ७५ ॥ विचार्यार्थंजपेद्यस्तुश्रद्धयातत्परोनरः ॥ स
विधूयेहपापानिलभतेवैष्णवंपदम् ॥ ७६ ॥ लभतेवाञ्छितान्कामान्पुत्रपौत्रान्पशूंस्तथा ॥ दीर्घमायुर्बलंवीर्यंलभतेससदापठन् ॥ ७७ ॥

---

१ 'पूर्णं चित्सदानन्दलक्षणम्' इ० पा० ।

तिलपात्रसहस्रेणगोसहस्रेणयत्फलम् ॥ तत्फलंसमवाप्नोतियइमांकीर्तयेत्स्तुतिम् ॥ ७८ ॥ धर्मार्थकाममोक्षणांयंयंकामयतेसदा ॥ अचिरा
त्तमवाप्नोतिस्तोत्रेणानेनमानवः ॥ ७९ ॥ आचारेविनयेधर्मेज्ञानेतपसिसन्नये ॥ नृणांभवतिनित्यंधीरिमांसंशृण्वतांस्तुतिम् ॥ २८० ॥ महा
पातकयुक्तोवायुक्तोवाह्युपपातकैः ॥ सद्योभवतिशुद्धात्मास्तोत्रस्यपठनात्सकृत् ॥ ८१ ॥ प्रज्ञालक्ष्मीयशःकीर्तिज्ञानधर्मविवर्धनम् ॥ दुष्ट
ग्रहोपशमनंसर्वाशुभविनाशनम् ॥ ८२ ॥ सर्वव्याधिहरंपथ्यंसर्वारिष्टनिषूदनम् ॥ दुर्गतेस्तरणंस्तोत्रंपठितव्यंद्विजातिभिः ॥ ८३ ॥ नक्ष
त्रग्रहपीडासुराजचोरभयेषुच ॥ अग्निचोरनिपातेषुसद्यःसंकीर्तयेदिदम् ॥ ८४ ॥ सिंहव्याघ्रभयंनास्तिनाभिचारभयंतथा ॥ भूत
प्रेतपिशाचेभ्योराक्षसेभ्यस्तथैवच ॥ ८५ ॥ पूतनाजृम्भकेभ्यश्चविघ्नेभ्यश्चैवसर्वदा ॥ नृणांक्वचिद्भयंनास्तिस्तवेह्यस्मिन्प्रकीर्तिते ॥ ८६ ॥
वासुदेवस्यपूजांयःकृत्वास्तोत्रमुदीरयेत् ॥ लिप्यतेपातकैर्नासौपद्मपत्रमिवाम्भसा ॥ ८७ ॥ गङ्गादिपुण्यतीर्थेषुयास्नानैर्नाप्यतेगतिः ॥
तांगतिंसमवाप्नोतिपठन्पुण्यामिमांस्तुतिम् ॥ ८८ ॥ एककालंद्विकालंवात्रिकालंवापियःपठेत् ॥ सर्वदासर्वकालेषुसोऽक्षयंसुखमश्नुते ॥
॥ ८९ ॥ चतुर्णामपिवेदानांत्रिरावृत्त्याचयत्फलम् ॥ तत्फलंलभतेस्तोत्रमधीयानःसकृन्नरः ॥ २९० ॥ अक्षय्यंधनमाप्नोतिस्त्रीणांभव
तिवल्लभः ॥ पूजांविन्दतिलोकेऽस्मिञ्छ्रद्धयासंस्मरन्हरिम् ॥ ९१ ॥ सर्वदासंपदायुक्तोविपदंनैवगच्छति ॥ गोभिर्नह्रियतेस्तोत्रंनित्यंयःकीर्तये
द्द्रियत् ॥ ९२ ॥ अलक्ष्मीःकालकर्णीचदुःस्वप्नंदुर्विचिन्तितम् ॥ सद्योनश्यन्तिभक्तानामेतंसंशृण्वतांस्तवम् ॥ ९३ ॥ प्रातरुत्थाययोऽधीते
शुचिर्विष्णुपरायणः ॥ अक्षय्यंलभतेसौख्यमिहलोकेपरत्रच ॥ ९४ ॥ देवद्युतिप्रणीतंवैविष्णुप्रीतिकरंशुभम् ॥ विष्णुप्रसादजननं
विष्णुदर्शनकारकम् ॥ ९५ ॥ योगसारमिदंनामस्तोत्रंपरमपावनम् ॥ यःपठेत्सततंभक्त्याविष्णुलोकंसगच्छति ॥ ९६ ॥ इतितेकथितं
स्तोत्रंगुह्यंपापप्रणाशनम् ॥ अतऊर्ध्वंप्रवक्ष्यामिपिशाचस्यविमोचनम् ॥ २९७ ॥ इतिश्रीपाद्ममहापुराणेपञ्चपञ्चा०उत्तर०माघमाहात्म्ये
वसिष्ठदिलीपसंवादेयोगसारस्तोत्रकथनंनामसप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ वसिष्ठउवाच ॥ श्रूयतांयेपिशाचाश्चमोचितास्तेन ॥ १२० ॥
तद्वने ॥ आसीद्राजाचित्रनामाद्राविडविषयेपुरा ॥ १ ॥ सोमान्वयेमहावीरःशूरःशस्त्रास्त्रपारगः ॥ गजवाजिरथौघैश्चसंपन्नोविक्रमीस
दा ॥ २ ॥ स्वर्णैर्नानाविधैरत्नैःपूर्णकोशोमहाधनः ॥ मध्येनारीसहस्रस्यसदाक्रीडतितत्परः ॥ ३ ॥ स्त्रैणःकामीसदालुब्धश्चण्डकोपः
सपार्थिवः ॥ नकरोतिवचोधर्म्यंसचिवैःसमुदीरितम् ॥ ४ ॥ विष्णुंनिन्दतिसोऽत्यर्थंवैष्णवान्द्वेष्टिसर्वदा ॥ कोऽसौविष्णुःक्वदृष्टोऽसौक्वचास्ते

केनकीर्त्यते ॥ ५ ॥ इत्थंनसहतेविष्णुंसराजादैवमोहितः ॥ नारायणंभजन्तेयेतान्पीडयतिकोपितः ॥ ६ ॥ नब्राह्मणान्नवेदांश्चवैदिकंकर्मनव
तम् ॥ नदानंमन्यतेदातुंपाखण्डस्थितिसंस्थितः ॥ ७ ॥ अनीत्याचण्डदण्डैश्चप्रजापीडांकरोतिसः ॥ निष्ठुरोनिर्दयःक्रूरःपुण्यकार्यपराङ्मु
खः ॥ ८ ॥ च्युताचारोऽच्युतद्वेष्टाच्युताग्निश्चच्युतक्रियः ॥ सोऽनुशास्तिजनंभूपःकालरूपइवापरः ॥ ९ ॥ ततोबहुतिथेकालेसराजापञ्चतां
गतः ॥ वैदिकेनविधानेनलेभेनैवौर्ध्वदैहिकम् ॥ १० ॥ अथकिङ्करयूथेनपीड्यमानोभृशंतदा ॥ अयःकीलमयेमार्गेतप्तसिक्ताप्रपूरिते ॥११॥ चण्डा
र्करश्मिसंतप्तेवृक्षच्छायाविवर्जिते ॥ तप्ताङ्गारप्रकीर्णेचवह्निज्वालासमाकुले ॥ १२ ॥ लोहतुण्डैश्चकाकोलैर्हन्यमानःसुदारुणैः ॥ वृकैर्दंष्ट्राकरालैश्चश्व
भिर्घोरैश्चभक्षितः ॥ १३ ॥ शृण्वन्क्रन्दितमन्येषांनृणांकिल्बिषकारिणाम् ॥ जमामंपार्थिवोलोकमन्तकस्यभयावहम् ॥१४॥ शृणुभूपगतिंतस्यतस्मिँ
ल्लोकेसुदुःसहाम् ॥ निरयान्निरयंयातःपर्यायेणसभूपतिः ॥१५॥ आदौप्रयातस्तामिस्रेदारुणेभूरिदुःखदे ॥ पुनश्चैवान्धतामिस्रेयत्रदुःखंनिरन्तरम् ॥
॥ १६॥ गतोऽनन्तरमत्युग्रंमहारौरवरौरवम् ॥ नरकंकालसूत्रंचमहानरकमेवच ॥ १७ ॥ पश्चान्मग्नःसभूपालोदुस्तरेदुःखमूर्छितः॥ संजीवनेमहावीचौ
तापनेसंप्रतापने ॥ १८ ॥ प्रतापनरकंगजादुःखाग्निप्लुष्टमानसः ॥ संघातंचसकाकोलंकुड्मलंपूतिमृत्तिकम् ॥ १९ ॥ लोहशङ्कुमृगीयन्त्रंपन्थानं
शाल्मलिंनदीम् ॥ प्रविष्टोऽथमहाभीमंदुर्दर्शंदुर्गमंपुनः ॥ २० ॥ असिपत्रवनंचैवलोहचारकमेवच ॥ एवमेतेषुसर्वेषुपतित्वापापकृन्नृपः ॥ २१ ॥
अविन्दन्नरकेघोरेसंतापंयातनामयम् ॥ विष्णुप्रद्वेषदोषेणयुगानामेकविंशतिः ॥२२॥ भुक्त्वाचयातनांयाम्यांनिस्तीर्णनरकोनृपः ॥ ममयाद्रिगिराजे
तुपिशाचोऽभूत्तदामहान् ॥ २३ ॥ सभ्राम्यतिदिशःसर्वावनेतस्मिन्बुभुक्षितः ॥ नपश्यत्यशनंनोयंमेरावपिसदागिरौ ॥२४ ॥ कदाचित्पर्यटन्सोऽथ
पिशाचःशोकपीडितः ॥ प्लक्षप्रस्रवणारण्यंप्रविष्टोभाविसत्फलम् ॥२५॥ विश्रान्तकनरुच्छायांसमाश्रित्यसुदुःखितः ॥हाहतोऽस्मीतिचाक्रन्दद्घोरमुच्चैः
पुनःपुनः ॥ २६ ॥ क्षुत्तृड्भ्यांसुभृशंमेऽस्यसर्वभूतसुहोमम॥ जन्मनोऽस्यदुरन्तस्यकथमन्तोभविष्यति ॥ २७ ॥ आदौपापसमुद्रेऽस्मिन्दुःखकल्लोल
मालिनि ॥ करावलम्बनंकोऽद्यनिमग्नस्यप्रदास्यति ॥२८॥ इत्थंतस्यपिशाचस्यगेदनंदीनचेतसः ॥ देवद्युतिर्ध्यायानःशुश्रावकरुणामयम ॥ २९ ॥
समागम्यततस्तत्रतंपिशाचंददर्शसः ॥ विकरालमुखंभीमंपिशङ्गनयनंकृशम् ॥ ३० ॥ ऊर्ध्वकेशंजकुप्पाङ्गंयमदूतमिवापरम् ॥ लम्बजिह्वंचलम्बोष्ठं
दीर्घजङ्घंशिराकुलम् ॥३१॥ दीर्घाङ्घ्रिंशुष्कतुण्डंचगर्ताक्षंशुष्कपञ्जरम् ॥ अथायंकौतुकाविष्टःपप्रच्छमुनिपुङ्गवः ॥३२॥ देवद्युतिरुवाच ॥ कोऽसि
त्वंभीषणाकारःकुतोरोदिषिदारुणम्॥ अवस्थेयंकुतोत्रहिकिंचाहंकरवाणिते ॥३३॥ ममाश्रमप्रविष्टाहिदुःखयाजोनजन्तवः॥ मोदन्तेकेवलंसर्वेवैष्णवे

भवनेयथा ॥२४॥ वदत्वंमत्वरंभद्रदुःखस्यैतस्यकारणम् ॥ कालक्षेपंनकुर्वन्तिप्राप्तेऽर्थेहिमनीषिणः ॥२५॥ वसिष्ठउवाच ॥श्रुत्वैतद्वचनंप्रीतःपिशाच
स्त्यक्तरोदनः ॥ उवाचदीनयावाचाप्रश्रयावनतस्तदा ॥२६॥ पिशाचउवाच ॥ सर्वाङ्गव्यापिसंतापंजहारत्वद्वचोमयि ॥ ग्रीष्मेदावानलोद्भूतंवर्षन्मेघ
इवाचले ॥२७॥ यन्मेऽस्तिसुकृतंकिंचित्तेनदृष्टोऽसिमेद्विज ॥नह्यसंचितपुण्यानांसद्भिरेकत्रसंगमः ॥२८॥इत्युक्त्वाकथयामासपूर्ववृत्तान्तमात्मनः ॥
विष्णुद्वेषप्रदोषेणदशामेतामहंगतः ॥ ३९ ॥ यन्नामप्राणान्मुक्तोहिस्मृत्वाविष्णुपदंव्रजेत ॥ पापिष्ठोहिहरौतस्मिन्ममद्वेषोऽभवद्द्विज ॥ ४० ॥
यःपालयंतिभूतानिधर्मंयात्रिजगत्त्रये॥ योऽन्तरात्माचभूतानांतस्मिन्द्वेषोममाभवत् ॥४१॥कर्मणांफलदोयोऽत्रसर्ववेदेपुगीयते ॥तपोभिरिज्यतेविप्रैः
समद्वेषवशंगतः ॥ ४२ ॥ त्यक्तक्रियैःप्रियारण्यैर्निःसङ्गैकचरैश्चयः ॥ वेदान्तेयतिभिश्चिन्त्यःसमेद्वेषीहरिर्द्विज ॥ ४३ ॥ ब्रह्मादयःसुराःसर्वेयोगिनः
सनकादयः ॥ मुक्त्यर्थमर्चयन्तीहसविष्णुर्द्वेपितोमया ॥४४॥ आदौमध्यऽवसानेयोविश्वधातासनातनः ॥ यस्यनैवादिमध्यान्ताःसमेद्वेषपदंययौ ॥
॥ ४५ ॥ यन्मयासुकृतंकर्मकृतंप्राक्तनजन्मनि ॥ विष्णुद्वेषाग्निनादग्धंतत्सर्वंभस्मसादभूत् ॥ ४६ ॥ कथंचिदस्यपापस्यसीमांद्रक्ष्यामिचेदहम् ॥
मुक्त्वानारायणंनान्यमर्चयिष्यामिदेवताम् ॥ ४७ ॥ विष्णुद्वेषाच्चिरंभुक्तामयानरकयातना ॥ निरयान्निसृतःसोऽहंपैशाचींयोनिमागतः ॥ ४८ ॥
अधुनाकर्ममन्त्रैःकैरथानीतस्त्वदाश्रमम्॥यत्रत्वद्दर्शनार्कान्मेनष्टंदुःखमयंतमः॥४९॥प्राप्यतेमरणंयत्रबन्धनंश्रीःसुखंवधूः॥सतत्रनीयतेस्वेनकर्मणागल
हस्तिना ॥५०॥ इदानीमुचितंकर्मब्रूहिपैशाच्यनाशनम् ॥ परोपकारकार्येहिनधन्यामन्दगामिनः ॥५१॥देवद्युतिरुवाच ॥ अहोमुष्णातिमायेयंदेवा
सुरनृणांस्मृतिम् ॥ ययादेवेष्वपिद्वेषोजायतेधर्मनाशनः ॥ ५२ ॥ स्रष्टापालयिताहन्ताजगतांयोमहेश्वरः ॥ आत्माचसर्वभूतानांतंमूढोद्वेष्टि
कःकथम् ॥ ५३ ॥ भवन्तिसर्वकर्माणिसफलानियदर्पणात् ॥ तद्भक्तिविमुखोमर्त्यःकोनयातीहदुर्गतिम् ॥ ५४ ॥ श्रुतिस्मृतिसदाचारविहितं
कर्मकेवलम् ॥ सेवितव्यंचतुर्वर्णैर्भजेन्नारायणंसदा ॥५५॥ अन्यथानिरयंयान्तिविनाह्यागमसेवनात्॥अतोवेदविरुद्धार्थशास्त्रोक्तंकर्मसंत्यजेत्॥५६॥
स्वबुद्धिरचितैःशास्त्रैःप्रतार्येहतुबालिशान्॥विघ्नन्तिश्रेयसोमार्गंलोकनाशायकेवलम्॥५७॥विष्णुंनिन्दन्तिवेदांश्चतपोनिन्दन्तिसद्द्विजान् ॥तेनतेनरकं
यान्तिह्यसच्छास्त्रनिषेवणात् ॥ ५८ ॥ अयमेवयथाराजाद्रविडोनिरयंगतः ॥ द्विषन्नारायणंदेवंदेवदेवंजगत्प्रभुम् ॥ ५९ ॥ तस्माद्द्वेषंहिदेवेषुब्राह्मणेषु
विशेषतः ॥ संत्यजेत्पुण्यकामोऽत्रवेदबाह्यांक्रियांत्यजेत् ॥ ६० ॥ इत्युक्त्वाकथयामासपिशाचायहितंमुनिः ॥ प्रयागंगच्छभोभद्रमाघमासंविचारय
॥६१॥ यत्रतेनिश्चितामुक्तिःपैशाच्यान्नात्रसंशयः ॥ तत्राप्लुतादिवंयान्तिश्रुतिरेषासनातनी ॥ ६२ ॥ विजहातिनरस्तत्रप्राक्तनंकर्मदुष्कृतम्॥ प्रयाग

स्नानतोनास्तिक्काप्यन्यदधिकंपरम् ॥ ६३ ॥ प्रायश्चित्तंतपोरूपंदानरूपंक्रियात्मकम् ॥ यागयोगाधिकंविद्धिप्रयागंपापिनामपि ॥६४॥ स्वर्गापव
र्गयोर्द्वारंतत्पृथिव्यामपावृतम् ॥ सितासितोदवेणीयातांहित्वाभुविनापरा ॥६५॥ पापनैगडबद्धस्यच्छेदनैककुठारिका ॥ क्वविष्णुःसूर्यतंजोऽग्निर्गङ्गा
यामुनसंगमः ॥ ६६ ॥ क्वराकीनृणांतुच्छापापराशितृणाहुतिः ॥ मलीमसघनध्वंसेयथाशरदिचन्द्रमाः ॥ ६७ ॥ भातिपापक्षयादूध्वनरोवेणीजल
प्लुतः ॥ सितासितस्यमाहात्म्यमहंवक्तुंनतेक्षमः ॥६८॥ यत्तोयकणसंस्पृष्टोमुक्तःकेरलकोद्विजः ॥ इतिवाक्यमृपेःश्रुत्वापिशाचस्तुष्टमानसः॥६९ ॥
मुक्तदुःखइवप्रीतःपप्रच्छप्रणयान्मुनिम् ॥ कथंकेरलदेशीयोद्विजोमुक्तोमहामुने ॥७०॥ एतंकथयवृत्तान्तंसंश्रित्यकरुणामयि ॥७१॥ देवद्युतिरुवाच॥
पिशाचश्रृणुपुण्यांमेकथांकथयतःशुभाम् ॥ केरलेवसुनामात्रब्राह्मणोवेदपारगः ॥७२॥ दायादैर्हृतवित्तस्तुनिर्धनोबन्धुवर्जितः॥जन्मभूमिंपरित्यज्य
महादुःखेनदुःखितः ॥७३॥ देशाद्देशंपरिभ्रम्यकालेनमहतापुनः ॥ प्रविश्यसमहारण्यमीपद्व्याधिप्रपीडितः ॥७४॥ गच्छंस्तीर्थान्तरंश्रान्तःक्षुत्क्षामो
विन्ध्यपर्वते ॥ दुर्भिक्षेणमृतिंलेभेनदाहंचौर्ध्वदेहिकम्॥७५॥तेनकर्मविपाकेनतत्रैवगिरिगह्वरे॥प्रेतीभूतश्चिरंकालमुवासनिर्जनेवने ॥७६॥ शीतातपपरि
क्लिष्टोनिराहारोनिरूदकः॥दिगम्बरोव्युपानत्कोगिराहाहेतिनिःश्वसन्॥७७॥इतस्ततःपरिभ्रम्यवायुभूतःसकेरलः॥द्विजोनशरणंलेभेनसुखंकुत्रचित्तदा॥
॥७८॥संशोचतिस्मदुःखार्तोनवपश्यतिसद्गतिम् ॥ सर्वदादत्तदानंसभुङ्क्तेस्वंकर्मणःफलम् ॥७९॥ हविर्जुह्वतिनाग्नौयेगोविन्दंनार्चयन्तिये ॥ भजन्ते
नात्मविद्यांयेसुतीर्थविमुखाश्चये ॥ ८० ॥ सुवर्णवस्त्रताम्बूलंमणिमन्नंफलंजलम् ॥ आर्तेभ्योनप्रयच्छन्तिसर्वेतेकृतहीनकाः ॥ ८१ ॥ ब्रह्मस्वंचपर
स्वंचमन्नीधनानिहरन्तिये ॥ बलेनच्छद्मनावापिधूर्ताश्चपरवञ्चकाः ॥ ८२ ॥ दाम्भिकाःकुहकाश्चौगयेचपातकवृत्तयः ॥ बालवृद्धातुरस्त्रीषुनिर्दयाः
सत्यवर्जिताः ॥८३॥ अग्निदागरदायेचयेचान्येकूटसाक्षिणः ॥ अगम्यागामिनःसर्वेयचान्यग्रामयाजिनः ॥८४॥ पितृमातृसुपापत्यस्वदारत्यागि
नश्चये ॥ येकदर्याश्चलुब्धाश्चनास्तिकाधर्मदूपकाः॥८५॥त्यजन्तिस्वामिनंयुद्धेत्यजन्तिशरणागतम् ॥ गवांभूमेश्चहन्तारोयेचान्येरत्नदूपकाः॥८६॥
परापवादिनःपापादेवतागुरुनिन्दकाः ॥ महाक्षेत्रेषुसर्वेषुप्रतिग्रहरताश्चये ॥८७॥ परद्रोहरतायेचतथाचप्राणिहिंसकाः ॥ कुप्रतिग्राहिणःसर्वेतेभवन्ति
पुनःपुनः ॥ ८८ ॥ प्रेतराक्षसपैशाचतिर्यग्वृक्षकुयोनिषु ॥ नतेषांसुखलेशोऽस्तिइहलोकेपरत्रच ॥ ८९ ॥ तस्मात्त्यक्त्वानिषिद्धार्थंविहितंकर्म
चाचरेत् ॥ यज्ञंदानंतपस्तीर्थंमन्त्रंदेवंगुरुंभजेत् ॥ ९० ॥ विपाकंकर्मणांदृष्ट्वायोनिकोटिपुदुस्तरम् ॥ चतुर्भिरपिवर्णैश्चसेव्योधर्मोनिरन्तरम् ॥९१॥
इतिप्रेतगतिंदृष्ट्वापापबीजोंऽथतांहिंसः ॥ कृत्वाधर्मोपदेशंचपुनस्तस्मैद्विजोऽब्रवीत ॥ ९२ ॥ इत्थंसकेरलःप्रेतोवर्तमानोगिरौतदा ॥ अतिवाह्यचिरं

कालमपश्यत्पथिकंपथि ॥९३॥ वहन्तंद्वौकरण्डौचवेणीजलयुतौतथा ॥ गायन्तंप्रमुखादेवंपुण्यश्लोकंजनादनम् ॥ ९४ ॥ तंदृष्ट्वासहसाप्रेतोमार्गरोधं
चकारसः ॥ दर्शयामासचात्मानंमाभैषीरित्युवाचसः ॥ ९५ ॥ पानीयंपातुमिच्छामित्वत्तःकार्पटिकोत्तम ॥ नदास्यसिजलंचेन्मेप्राणायास्यन्ति
मेदृढम् ॥ ९६ ॥ इतिप्रेतवचःश्रुत्वापान्थःप्रत्याहकौतुकात् ॥९७॥ कार्पटिकउवाच ॥ कस्त्वंदुःखाभिभूतस्तुकृशोम्लानोदिगम्बरः ॥ जीवशेषोमु
मूर्षुश्चविकृतोभयवर्धनः॥९८॥नवधूम्रमयाकारश्चण्डश्चञ्चललोचनः॥पद्भ्यामस्पृष्टभूमिस्त्वंनिर्मांसोदरबाहुकः॥इतितद्वचनंश्रुत्वाप्रेतोवाक्यमथाब्रवीत
॥९९॥प्रेतउवाच ॥ शृणुधर्मिष्ठतेवच्मियेनाहमीदृशोऽभवम् ॥ ब्राह्मणोऽदत्तदानोऽहंलोभीचमलिनक्रियः ॥ १०० ॥ परान्नंचसदाभुक्तमेकाकीमिष्ट
भोजनः ॥ मयादत्तानभिक्षापिहन्तकारोनपुष्कलः ॥ १ ॥ नकृतोवैश्वदेवस्तुप्रक्षिप्तोनबहिर्बलिः ॥ भूतानांतुतृषार्तानांनहतापयसाचतृट् ॥ २ ॥
कदाचित्पितरोनैवतर्पिताअटतामहीम् ॥ नचश्राद्धंकृतंक्कापिपूजितानैवदेवताः ॥ ३ ॥ वर्षातपपरित्राणंनदत्तंपादरक्षणम् ॥ जलपात्रमदत्तंच
ताम्बूलंनौषधंमया ॥ ४ ॥ नगृहेवसतिर्दत्तानातिथ्यंकस्यचित्कृतम् ॥ अन्धवृद्धाधनानाथदीनाःपानान्नतोषिताः ॥ ५ ॥ गवांग्रासोनदत्तो
वैनरोगीपरिमोचितः ॥ नदत्तानहुताविप्रपवित्राश्चतिलामया ॥ ६ ॥ पृथिव्यांतिलदातारोनभवन्तितुमद्विधाः ॥ व्यतीपातेनदत्तंहि
किंचित्स्वर्णंमहाफलम् ॥ ७ ॥ संक्रान्तावुपरागेचनदत्तंसूर्यचन्द्रयोः ॥ पर्वाण्यन्यानिसर्वाणिजग्मुःशून्यानिमेद्विज ॥ ८ ॥ तिथयः
कार्तिकेमुख्याजातावन्ध्याःसदामम ॥ पितृभ्योनैवदत्तंवाह्यष्टकासुमघासुच ॥ ९ ॥ द्विजानांनकृताप्रीतिर्मन्वादिषुयुगादिषु ॥ नदत्त
स्तिलतैलेनप्रदीपःकार्तिकेमया ॥ ११० ॥ नस्नातोमाघमासेऽहंरूपसौभाग्यकामदे ॥ द्विजायवेदविदुषेगौतम्यांसिंहगेगुरौ ॥ ११ ॥
मयासंकल्पितंद्रव्यंनदत्तंपूर्वजन्मनि॥ नस्नातोऽहंकृष्णवेण्यांतथाकन्यागतेगुरौ ॥ १२ ॥ अग्निंप्रज्वाल्यकाष्ठौघैःस्नातानांपौषमाघयोः ॥ शीतार्ता
नांचविप्रणांनकृतोजाड्यनिग्रहः ॥ १३ ॥ माधवादिषुमासेषुनदत्तंशीतलंजलम् ॥ मयानारोपितोऽश्वत्थोन्यग्रोधोनैववर्धितः ॥ १४ ॥
बन्दीगेहान्मयामुक्तिर्नकृताप्राणिनांक्कचित् ॥ नप्राणिभयसंत्रस्तोरक्षितःशरणागतः ॥ १५ ॥ नोपोष्यात्रत्रिरात्राणितोषितोमधुसूदनः ॥
कृच्छ्रातिकृच्छ्रपाराकंतथाचान्द्रायणंद्विज ॥ १६ ॥ अथान्यत्तप्तकृच्छ्रंचतथासांतपनानिच ॥ व्रतान्येतानिपुण्यानिजुष्टानीन्द्रादिभिः
सुरैः ॥ १७ ॥ चरित्वानमयातानिदेहःसंशोषितःपुरा ॥ इत्थंपूर्वभवोवन्ध्योममजातोद्विजोत्तम ॥ १८ ॥ पश्यद्विजमहाक्रूरा
मद्भुतामत्रजन्मनि ॥ गतिंदूरप्रबोधांतुममपूर्वस्यकर्मणः ॥ १९ ॥ मन्तिमांसानिमार्गेषुवृकव्याघ्रहतानिवै ॥ फलान्यन्यानिशैलेऽस्मि

न्छुकैस्त्यक्तानिसर्वतः ॥ १२० ॥ पुण्यानिचसुगन्धीनिफलानिस्रवन्तिच ॥ मूलानितुसुभक्ष्याणिमृदूनिमधुराणिच ॥ २१ ॥ नानाविधानि
तिष्ठन्तिमधूनिसुबहून्यपि ॥ स्रोतसांनिर्झराणांचसन्तिवारीणिसर्वशः ॥ २२ ॥ सुलभेषुपदार्थेषुसर्वेष्वतेपुपर्वते ॥ नेक्षेऽहमशनंक्वापिदैवेनापिहतं
सदा ॥ २३ ॥ वाताहारेणजीवामियथाजीवन्तिपन्नगाः ॥ पुनर्जीवामिभोविप्रदेवयोनिप्रभावतः ॥ २४ ॥ बलेनप्रज्ञयानित्यंमन्त्रपौरुषविक्रमैः
सहायैश्चैवमित्रैश्चनालभ्यंलभतेनरः ॥ २५ ॥ लाभालाभसुखेदुःखेविवाहेमृत्युजीवने ॥ भोगेरोगेवियोगेचदैवमेवहिकारणम् ॥ २६ ॥ कुरूपाः
कुकुलामूर्खाःकुत्सिताचारनिन्दिताः ॥ शौर्यविक्रमहीनाश्चदैवाद्राज्यानिभुञ्जते ॥ २७ ॥ काणाःखञ्जाअभव्याश्चनीतिहीनाश्चदुर्गुणाः ॥ नपुंसका
श्चदृश्यन्तेदैवाद्राज्येप्रतिष्ठिताः ॥ २८ ॥ यैर्दत्ताश्चतिलागावोहिरण्यंवसनानिच ॥ गौरीकन्याचयैर्दत्तायैर्दत्ताचवसुन्धरा ॥ २९ ॥ शय्यासनानि
ताम्बूलंमन्दिराणिधनानिच ॥ भक्ष्यभोज्यानिदत्तानिचन्दनान्यगरूणिच॥१३०॥अटव्यांपर्वताग्रेचग्रामेवानगरेऽपिवा ॥ पुरःपुरश्चतिष्ठन्तितेषांभो
गाःप्रयत्नतः ॥ ३१ ॥ सन्त्यत्रपर्वतेऽन्येऽपिराक्षसाबलवत्तराः ॥ राक्षसाश्चपिशाचाश्चपिशाच्यश्चातिदारुणाः ॥ ३२ ॥ कदाचिच्चकथंचिच्चक्कापि
यत्रस्वकर्मणा ॥ लभन्तेचान्नपानानिपर्यटन्तोवनेवने ॥ ३३ ॥ इतिश्रुत्वात्रतेभ्यश्चमाभयंभवतांभवेत ॥ शुचिंगोविन्दभक्तंत्वांनतेद्रष्टुमपिक्षमाः
॥ ३४ ॥ विष्णुभक्तितनुत्राणंनारायणपरायणम् ॥ नस्पृशन्तिनपश्यन्तिराक्षसाःप्रेतपूतनाः ॥ ३५ ॥ भूतवेतालगन्धर्वाःशाकिन्यश्चार्यकाग्रहाः ॥
रेवत्योवृद्धरेवत्योमुखमण्डचस्तथाग्रहाः ॥ ३६ ॥ यक्षाबालग्रहाःक्रूरादुष्टावृद्धग्रहाश्चये ॥ तथामातृग्रहाभीमाग्रहाश्चान्येविनायकाः ॥ ३७ ॥
कृत्याःसर्पाश्चकूष्माण्डायेचान्येदुष्टजन्तवः ॥ नपश्यन्तिपरंविप्रवैष्णवंब्राह्मणंशुचिम् ॥ ३८ ॥ शुचिरक्षन्तिभूतानिधर्मिष्ठंपीडयन्तिन ॥
रक्षन्तिचशुचिंनित्यंग्रहनक्षत्रदेवताः ॥ ३९ ॥ गोविन्दनामाजिह्वाग्रेहृदिवेदस्तुसंस्थितः ॥ शुचिश्चदानशीलश्चत्वंसर्वत्राकुतोभयः ॥ १४० ॥
एवंब्राह्मणतिष्ठामिभुञ्जानःकर्मणःफलम् ॥ नशोचामीतिमत्वाहंविमृश्यचपुनःपुनः ॥ ४१ ॥ नदुनोमितथानावद्यावज्जम्बालिनीतटे ॥ सारसोदीरितं
वाक्यंश्रुतंपर्यटतामया ॥ ४२ ॥ ब्राह्मणउवाच ॥ सारसोदीरितंवाक्यंकीदृशंहिश्रुतंत्वया ॥ तदहंश्रोतुमिच्छामिब्रूहित्वंप्रेतसत्तम ॥ ४३ ॥
प्रेतउवाच ॥ ब्रवीमिसारसंवाक्यंशृणुकार्पटिकोत्तम ॥ धूम्रसरानामकक्षेऽस्मिन्नदीगिरिसमुद्भवा ॥ ४४ ॥ सदाजलाशयोत्तालामत्तदन्तिकुलाकुला ॥
महाककुभशोभाढ्यास्निग्धजम्बूमनोहरा ॥४५॥ तस्यास्तीरमहंप्राप्तोगाहमानोवनंघनम् ॥ मयितिष्ठतिवैतत्रफलभोजनकाम्यया ॥ ४६ ॥ वनान्त
रात्समुड्डीयसारसोलक्ष्मणायुतः ॥ आगत्यपुलिनंनद्याःसेवितुंबहुपक्षिभिः ॥ ४७ ॥ पीत्वातत्रैवपानीयंरमित्वाभार्ययासह ॥ सुप्तःपक्षपुटेवामे

प्रवेश्यचशिरोमुखम् ॥ ४८ ॥ एतस्मिन्नन्तरेदृष्टःपादपादवतीर्यच ॥ रक्ताननःसुरक्ताक्षोदण्डीदृढनखावलिः ॥ ४९ ॥ लोमशोदीर्घलाङ्गूलश्चल
चेष्टोहिवानरः ॥ यत्रासौसारसःसुप्तस्तत्रवेगेनचागतः ॥१५०॥ समागत्यचजग्राहसारसंचरणेदृढम् ॥ कराभ्यांक्रियावुद्धचापश्यतांबहुपक्षिणाम् ॥
॥ ५१ ॥ उड्डीयोड्डीयतेसर्वेगताश्चान्यत्रखेचराः ॥ सारसीभीतभीताचविरावान्कुर्वतीस्थिता ॥५२ ॥ सारसोभग्ननिद्रस्तुत्रासाच्चलितलोचनः ॥
अवलोकितवाञ्छीघ्रंतदोत्ताम्यशिरोधराम् ॥ ५३ ॥ विलोक्यवानरंदुष्टंहन्तुकामंसुदारुणम् ॥ तदासंभाषयामासगिरामधुरयाखगः ॥ ५४ ॥
अपराधंविनामांत्वंकिंशाखामृगबाधसे ॥ सापराधाजनालोकेवध्यन्तेभूमिपैरपि ॥ ५५ ॥ नपीडयितुमर्हन्तेत्वादृशाउत्तमाजनाः ॥ अस्मान्नहिंस
कान्साधून्परवृत्तिपराङ्मुखान् ॥ ५६ ॥ जलशैवालभक्षांश्चखेचरान्वनवासिनः ॥ स्वदाररतिशीलांश्चपरदाराभिवर्जितान् ॥ ५७ ॥ नपीडयितु
मर्हन्तित्वद्विधावानरोत्तम ॥ परापवादपैशुन्यान्द्विजान्परमसेवकान् ॥ ५८ ॥ शाखामृगविमुञ्चाशुसर्वथामामनागसम् ॥ जानामितवजन्माहंनत्वं
वेत्सितुमामकम् ॥ ५९ ॥ इत्याकर्ण्यवचस्तस्यमुमोचसारसंतदा ॥ चपलोवानरःशीघ्रमाहदूरेव्यवस्थितः ॥ १६० ॥ वानरउवाच ॥ ब्रूहिरेत्वंकथ
वेत्सिममजन्मपुरातनम् ॥ त्वंपक्षीज्ञानहीनश्चतिर्यक्चाहंवनेचरः ॥ ६१ ॥ सारसउवाच ॥ जानेऽहंतावकंजन्मजातिस्मरमितिस्फुटम् ॥ त्वंहिविन्ध्या
धिपोराजाप्राग्भवेपर्वतेश्वरः ॥ ६२ ॥ अहंपूज्यतमोविप्रस्तववंशेपुरोहितः ॥ तेनप्रत्यभिजानामित्वांसम्यग्वानरोत्तम ॥ ६३ ॥ इमांपालयताभूमिं
प्रजाःसर्वाःप्रपीडिताः ॥ त्वयाविवेकहीनेनभृशंसंचिन्वताधनम् ॥ ६४ ॥ प्रजापीडनतापोत्थवह्निज्वालैस्तुवानर ॥ प्राक्त्वंदग्धःपुनःकुम्भीपाके
ऽतिदारुणे॥ ६५ ॥पुनःपुनश्चदग्धेनजातेनचपुनःपुनः ॥ नारकेणशरीरेणसमास्त्रिशद्गतंत्वया ॥ ६६ ॥ कुर्वतादारुणाञ्छब्दान्रुदताचपुनःपुनः ॥
कुम्भिपाकानलेतीव्राह्यनुभूताश्चयातनाः ॥ ६७ ॥ निस्तीर्णनरकोभूयःपापशेषेणसाम्प्रतम् ॥ प्राप्तोऽसिवानरंजन्मयेनमांहन्तुमिच्छसि ॥ ६८ ॥ विप्र
स्योपवनात्पूर्वंकरम्भापलानिवै॥अननुज्ञाप्यभुक्तानित्वयापहृत्यपौरुषात् ॥६९॥ विपाकःकर्मणस्तस्यफलतेपश्यदारुणः॥वानरस्त्वंवनेवासोह्यधुना
तेनवर्तसे॥१७०॥अशुभस्यशुभस्यापिपुराविहितकर्मणः ॥ भोगःक्रीडतिभूतेपुनोल्लङ्घ्यस्त्रिदशैरपि ॥७१॥ इत्थंत्वज्जन्मजानामियथावत्तुसहेतुकम् ॥
प्राप्तःसारसदेहोऽपिज्ञानेनापरिमोहितः ॥ ७२ ॥ प्रेतउवाच ॥ इतिश्रुत्वाकथांविप्रवानरोऽप्याहसारसम् ॥ सम्यग्वेत्तिभवान्नूनंकथंत्वंपक्षितांगतः ॥
॥७३॥सारसउवाच ॥ कथयिष्यामितत्कर्मयेनाहंदुर्गतिंगतः ॥ पक्षियोनिंगतोयेनतत्सर्वंश्रोतुमर्हसि ॥ ७४ ॥ धान्यंखारिशतंसाग्रमुत्सृष्टंहित्वया
पुरा ॥ बहुभ्योब्राह्मणेभ्यश्चनर्मदायांरविग्रहे ॥ ७५ ॥ पौरोहित्यमदाल्लोभाद्वञ्चयित्वाद्विजांस्तथा ॥ किंचिद्दत्त्वातुतेभ्यश्चगृहीतमखिलंमया ॥ ७६ ॥

धेनुसहस्राणिदास्यामितवसुव्रत ॥ २१ ॥ ईश्वरउवाच ॥इत्युक्तस्तेनराज्ञाहजमदग्निर्महातपाः ॥ २२ ॥ जमदग्निरुवाच ॥ नदेयाशबलाराजन्मयातव
महीपते ॥ इयंचदेवदेवेनशक्रेणपरिपालिता ॥ देवतानांधनंराजन्दातव्यंस्यात्कथंमया ॥ २३ ॥ ईश्वरउवाच ॥ इत्युक्तःसतदाराजाक्रोधेन
कलुषीकृतः ॥ बलाज्जग्राहशबलांसर्वसैन्यसमावृतः ॥ २४ ॥ ततःक्रुद्धामहाभागाशबलावरवर्णिनि ॥ जघानतस्यसैन्यानिशृङ्गैःखुरतलैरपि
॥ २५ ॥ घातयित्वामुहूर्त्तेनतत्सैन्यंशबलाबलात् ॥ अन्तर्द्धानंगतादेवीययौशक्रान्तिकंक्षणात् ॥ २६ ॥ स्वसैन्यंनिहतंदृष्ट्वासोऽर्जुनःक्रोध
मूर्छितः ॥ मुष्टिनाताडयामासभार्गवंद्विजसत्तमम् ॥ २७ ॥ ताडितस्तेनबहुशोविकलाङ्गःप्रकल्पितः ॥ पपातसहसाभूमौममारद्विजसत्तमः
॥ २८ ॥ हत्वामुनिवरंतत्रपापात्माहैहयाधिपः ॥ महासैन्यपरीवारोविवेशनगरंस्वकम् ॥ २९ ॥ रामस्तुदेवदेवेशंपूजयामासभार्गवः ॥
तेनसंपूजितोदेवःप्रसन्नःप्राहकेशवः ॥ ४० ॥ श्रीभगवानुवाच ॥ प्रीतोऽस्मितपसावत्सभवतोनियतात्मनः ॥ संप्रदास्यामितेविप्रमच्छक्तिंपरमां
शुभाम् ॥ ४१ ॥ आवेशितोऽथमच्छक्त्याजहिदुष्टान्नृपोत्तमान् ॥ भूभारकविनाशायदेवतानांहितायवै ॥ ४२॥ ईश्वरउवाच ॥ इत्युक्त्वाप्रददौदेवः
परशुंशत्रुधर्षणम् ॥ वैष्णवंचमहच्चापंदिव्याण्यस्त्राण्यनेकशः ॥ दत्त्वाप्रोवाचभगवाञ्जामदग्न्यंजनार्दनः ॥ ४३ ॥ श्रीभगवानुवाच ॥ मदोत्कटा
न्नृपान्हत्वाबहुशःपरवीरहा ॥ गृहाणपृथिवींसर्वांस्सागरान्तांद्विजोत्तम ॥ ४४ ॥ पालयस्वचधर्मेणवीर्येणमहतावृतः ॥ कालेनमत्पदंचापिमत्प्रसादा
द्गमिष्यसि ॥ ४५ ॥ ईश्वरउवाच ॥ इत्युक्त्वान्तर्हितोदेवोवरंदत्त्वाद्विजन्मने ॥ रामोऽपिचाथसहसाप्रययौपितुराश्रमम् ॥ ४६ ॥ पितरंनिहतंदृष्ट्वा
भार्गवःक्रोधमूर्च्छितः ॥ निष्क्षत्रांकर्तुमन्विच्छन्महींनृपसमाकुलाम् ॥ ४७ ॥ जगामहैहयपतेर्नगरंनृपसंवृतम् ॥ क्रोधावेशज्वलद्गात्रोद्धार्यतिष्ठदु
दायुधः ॥ ४८ ॥ तंदृष्ट्वातत्पुरजनाजामदग्न्यंमहौजसम् ॥ जाज्वल्यमानंवपुषाकालाग्निमिवमेनिरे ॥ ४९ ॥ भयाताविद्रुताःसर्वेराजानंहैहयाधि
पम् ॥ शशंसुस्तंमहासत्त्वंसर्वायुधसमन्वितम् ॥ श्रुत्वासराजातद्वाक्यंप्राहविस्मितचेतसा ॥ ५०॥ हैहयाधिपउवाच ॥ कोऽसौममपुरद्वारिसायुधः
संस्थितोबलात् ॥ महेन्द्रोवायमोवापिरुद्रोवाधनदोऽपिवा ॥ ५१ ॥सायुधोमत्पुरद्वारिस्थातुंशक्तोनकर्हिचित् ॥ ५२ ॥ महादेवउवाच ॥इत्यु
क्त्वापार्थिवेन्द्रोऽसौकिङ्करान्सुमहाबलान् ॥ प्रेरयामासतंदुष्टंगृह्णीतेत्याहदुर्मतिः ॥५३॥ तेगत्वाददृशुर्वीरंपुरद्वारिमहाबलम् ॥ ज्वलन्तमिवकालाग्निं
दुर्निरीक्ष्यंस्वतेजसा ॥ ५४ ॥ तस्यसंदर्शनेऽप्यत्रनशक्तास्तेमहाबलाः ॥ ग्रहीतुकामास्तंवीरंसमन्तात्प्रययुर्भृशम् ॥ ५५ ॥ तान्दृष्ट्वासायुधा
न्सर्वान्पार्थिवेन्द्रस्यकिंकरान्॥प्रहसन्प्राहविप्रेन्द्रोजामदग्न्योमहाबलः ॥५६॥ परशुरामउवाच॥भार्गवस्यसुतोरामःसंप्राप्तोऽहंनराधमाः ॥ स्वपितुर्नि

धनात्सर्वान्हनिष्यामिनृपोत्तमान् ॥ ५७ ॥ कार्तवीर्यस्यरुधिरंमत्पित्रेतिलसंयुतम् ॥ दास्यामिपिण्डदानंचतच्छिरःकबलेनवै ॥ ५८ ॥ महादेव
उवाच ॥ इत्युक्तास्तेमहावीर्याःकिङ्करास्तस्यभूपतेः ॥ शरैस्तंताडयामासुःपललैरिवपावकम् ॥ ५९ ॥ ततःक्रुद्धोमहावीर्योरामस्सत्य
पराक्रमः ॥ वैष्णवंचापमाकृष्यज्यानिनादमथाकरोत् ॥ ६० ॥ तेननादेनमहतापूरितंभुवनत्रयम् ॥ देवानामपिसंत्रासोबभूवमहदद्भुतम् ॥
॥६१॥ततःपावकसङ्काशैराशुगैःसुमहाबलः ॥ ताडयामासतान्वीरान्किङ्करान्वैमहाबलान् ॥६२॥ हत्वातुकिङ्करांस्तस्यपार्थिवस्यमहात्मनः॥ काला
ग्निरिवसंतस्थौसर्वभूतभयङ्करः॥६३॥ श्रुत्वातुकिङ्करान्स्वस्यहतान्रामेणधीमता॥हैहयाधिपतिर्वीरःक्रोधसंरक्तलोचनः ॥६४॥निर्ययौसहसैन्येनयत्रा
स्तेभार्गवोऽव्ययः ॥ तंदृष्ट्वाघोरसङ्काशंज्वलन्तंस्वेनतेजसा ॥ ६५ ॥ त्रस्ताःसर्वेजनास्तत्रशङ्कमानाजनक्षयम् ॥ ततोयुद्धंमहाघोरंरामस्यनृपते
स्तदा ॥ ६६ ॥ शस्त्रास्त्रपातनैर्भीमैर्मेघयोरिववर्षतोः ॥ ततोरामोमहातेजास्तत्सैन्यंनृपतेस्तदा ॥ ६७ ॥ निर्ददाहक्षणात्सर्वंवैष्णवास्त्रेणलीलया ॥
ततःपरशुनारामस्तीक्ष्णेनामितविक्रमः ॥ ६८ ॥ चिच्छेदबाहुसाहस्रंकार्तवीर्यस्यदुर्मतेः ॥ नशशाकमहावीर्योयोद्धुंरामेणभूपतिः ॥ ६९ ॥ नष्टवीर्यो
बभूवात्रपापेनस्वेनदुर्मतिः ॥ चिच्छेदतच्छिरःक्रुद्धोरेणुकातनयोबली ॥ ७० ॥ महाद्रिशृङ्गंवज्रेणयथादेवपतिर्बली ॥हत्वासहस्रबाहुंतंजामदग्न्यःप्रता
पवान् ॥ ७१ ॥ जघानपार्थिवान्सर्वान्क्रुद्धःपरशुनामृधे ॥ रामंदृष्ट्वामहारौद्रंपार्थिवाःपृथिवीतले ॥ ७२॥ भयार्त्ताविद्रुताःसर्वेनागाःकेसरिणंयथा॥
विद्रुतानपिभूपालान्पितुर्निधनमन्युना ॥७३॥ जघानभार्गवःक्रुद्धोनागानिवखगेश्वरः ॥ निःक्षत्रंकृतवान्सर्वंजामदग्न्यःप्रतापवान् ॥७४॥ ररक्षभग
वानेकमिक्ष्वाकोःसुमहत्कुलम् ॥ मातामहस्यान्वयत्वाद्रेणुकावचनादथ ॥ ७५ ॥ तान्भ्रष्टराज्यान्कृत्वावैमातामहकुलोद्भवान्॥ नहत्वामनुवंशांस्ता
न्रामोनृपकुलान्तकः ॥ ७६ ॥ सर्वंतुभूभृतांवंशंनाशयामासवीर्यवान् ॥ कृत्वाचोर्वींतुनिःक्षत्रांजमदग्निसुतोबली ॥ ७७ ॥ अश्वमेधंमहायज्ञंचकार
विधिवद्द्विजः ॥ प्रददौविप्रमुख्येभ्यःसप्तद्वीपवतींमहीम् ॥ ७८॥ दत्त्वामहींसविप्रेभ्योजामदग्न्यःप्रतापवान् ॥ तपस्तप्तुंययौसोऽथनरनारायणाश्रमम्
॥ ७९ ॥ एतत्तेकथितंदेविजामदग्न्यमहात्मनः ॥ शक्त्यावेशावतारस्यचरितंशार्ङ्गिणःप्रभोः ॥८०॥ नोपास्यंहिभवेत्तस्यशक्त्यावेशान्महात्मनः ॥
उपास्यौभगवद्भक्तौर्विप्रमुख्यैर्महात्मभिः ॥ ८१ ॥ रामकृष्णावतारौतुपरिपूर्णौहिसद्गुणैः ॥ उपास्यमानावृषिभिरपवर्गप्रदौनृणाम् ॥ ८२ ॥ इति
श्रीपाद्मेमहापुराणेपञ्चप०उत्तर०उमामहेश्वरसंवादेपरशुरामचरितंनामैकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥ रुद्रउवाच ॥ स्वाय
म्भुवोमनुःपूर्वंद्वादशार्णमहामनुम् ॥ जजापगोमतीतीरेनैमिषेविमलेशुभे ॥ १ ॥ तेनवर्षसहस्रेणपूजितःकमलापतिः ॥ मत्तोवरंवृणीष्वेतितंप्राह

भगवान्हरिः ॥ ततःप्रोवाचहर्षेणमनुःस्वायम्भुवोहरिम् ॥ २ ॥ मनुरुवाच ॥ पुत्रत्वंभजदेवेशत्रीणिजन्मानिवाच्युत ॥ त्वांपुत्रलालसत्वेनभजामि
पुरुषोत्तमम् ॥ ३ ॥ रुद्रउवाच ॥ इत्युक्तस्तेनलक्ष्मीशःप्रोवाचसुमहागिरा ॥ ४ ॥ विष्णुरुवाच ॥ भविष्यतिनृपश्रेष्ठयत्तेमनसिकाङ्क्षितम् ॥ ममैव
चमहाप्रीतिस्तवपुत्रत्वहेतवे ॥ ५ ॥ स्थितिप्रयोजनेकालेतत्रतत्रनृपोत्तम ॥ त्वयिजातेत्वहमपिजातोऽस्मितवसुव्रत ॥ ६ ॥ परित्राणायसाधूनां
विनाशायचदुष्कृताम् ॥ धर्म्मसंस्थापनार्थायसंभवामितवानघ ॥७॥ रुद्रउवाच॥ एवंदत्त्वावरंतस्मैतत्रैवान्तर्दधेहरिः ॥ अस्यांभूतप्रथमंजन्ममनोः
स्वायम्भुवस्यच ॥ ८ ॥ रघूणामन्वयेपूर्वंराजादशरथोह्यभूत् ॥ द्वितीयोवसुदेवोऽभूद्वृष्णीनामन्वयेविभुः ॥ ९ ॥ कलेर्दिव्यसहस्राब्दप्रमाणस्या
न्त्यपादयोः ॥ शम्भलग्रामकेमुख्येब्राह्मणःसंजनिष्यते ॥ १० ॥ ततोमुक्तिर्भवेत्तस्यमनोर्जन्मत्रयान्तरे ॥ राघवःप्रथमंजज्ञेकृष्णस्तुतदनन्तरम् ॥
॥ ११ ॥ कल्किरूपीहरिःपश्चाद्ब्राह्मणस्यजनिष्यति ॥ तस्यपत्नीमहाभागासुशीलानामभामिनी ॥ १२ ॥ कौसल्यासमभूत्पत्नीराज्ञोदश
रथस्यहि ॥ यदुवंश्यस्यसैवाथदेवकीनामविश्रुता ॥ १३ ॥ हरिव्रतस्यविप्रस्यभार्यादेवप्रभापुनः ॥ एवंमातृत्वमापन्नात्रीणिजन्मानि
शार्ङ्गिणः ॥ १४ ॥ पूर्वंरामस्यचरितंवक्ष्यामितवसुव्रते ॥ यस्यस्मरणमात्रेणविमुक्तिःपापिनामपि ॥ १५ ॥ हिरण्यकहिरण्याक्षौद्वितीयंजन्म
संश्रितौ ॥ कुम्भकर्णदशग्रीवावजायेतांमहाबलौ ॥ १६ ॥ पुलस्त्यस्यसुतोविप्रोविश्रवानामधार्मिकः ॥ तस्यपत्नीविशालाक्षीराक्षसेन्द्रसुतानघे
॥ १७ ॥ सुकेशितनयासास्यात्सुमालेर्दानवस्यच ॥ केकसीनामकन्यासीत्तस्यभार्यादृढव्रता ॥ १८ ॥ कामोद्रिक्तातुसादेवीसन्ध्याकालेमहामु
निम् ॥ रमयामासतन्वङ्गीयथेष्टंशुभदर्शना ॥ १९ ॥ तत्कालसम्भवौगर्भौतस्यांजातौमहाबलौ ॥ रावणःकुम्भकर्णश्चराक्षसौलोकविश्रुतौ ॥ २० ॥
कन्याशूर्पणखानामजातातिविकृतानना ॥ कस्यचित्त्वथकालस्यतस्यांजातोविभीषणः ॥२१॥ सुशीलोभगवद्भक्तःसत्यवाग्धर्मवाञ्शुचिः ॥ रावणः
कुम्भकर्णश्चहिमवत्पर्वतोत्तमे ॥ २२ ॥ महोग्रतपसामांवैपूजयामासतुर्भृशम् ॥ रावणस्त्वथदुष्टात्मास्वशिरःकमलैःशुभैः ॥ २३ ॥ पूजयामासमां
देविदारुणेनैवकर्मणा ॥ ततस्त्वमब्रवंसुभ्रुःप्रहृष्टेनान्तरात्मना ॥ २४ ॥ वरंवृणीष्वमेवत्सयत्तेमनसिवर्त्तते ॥ ततःप्रोवाचदुष्टात्मादेवदानवरक्षसाम्
॥ २५ ॥ अवध्यत्वंप्रदेहीतिसर्वलोकजिगीषया ॥ ततोऽहंदत्तवांस्तस्मैराक्षसायदुरात्मने ॥ २६ ॥ देवदानवयक्षाणामवध्यत्वंवरानने ॥ राक्षसो
ऽसौमहावीर्योवरदानात्तुगर्वितः ॥ २७ ॥ त्रीँल्लोकान्पीडयामासदेवदानवमानुषान् ॥ तेनसंबाध्यमानाश्चदेवाब्रह्मपुरोगमाः ॥ २८ ॥ भयार्त्ताःशरणं
जग्मुरीश्वरंकमलापतिम् ॥ ज्ञात्वाथवेदनांतेषामभयायसनातनः ॥ उवाचत्रिदशान्सर्वान्ब्रह्मरुद्रपुरोगमान् ॥ २९ ॥ श्रीभगवानुवाच ॥ राज्ञोदशरथ

स्याहमुत्पत्स्यामिरघोःकुले ॥ हनिष्यामिदुरात्मानंरावणंसहबान्धवम् ॥३०॥ मानुषंवपुरास्थायहन्मिदैवतकण्टकम् ॥ नन्दिशापाद्भवन्तोऽपिवान
रत्वमुपागताः ॥ कुरुध्वंममसाहाय्यंगन्धर्वाप्सरसोत्तमाः ॥ ३१ ॥ रुद्रउवाच ॥इत्युक्तादेवतास्सर्वादेवदेवेनविष्णुना ॥ वानरत्वमुपागम्यजज्ञिरेपृथि
वीतले ॥ ३२ ॥ भार्गवेणप्रदत्तातुमहीसागरमेखला ॥ दत्तामहर्षिभिःपूर्वंरघूणांसुमहात्मनाम् ॥ ३३ ॥ वैवस्वतमनोःपुत्रोराज्ञांश्रेष्ठोमहाबलः ॥ इक्ष्वा
कुरितिविख्यातस्सर्वधर्मविदांवरः ॥३४॥ तदन्वयेमहातेजाराजादशरथोबली॥अजस्यनृपतेःपुत्रःसत्यवाञ्छीलवाञ्छुचिः ॥३५॥ सराजापृथिवींसर्वां
पालयामासवीर्यतः ॥ राज्येपुस्थापयामाससर्वान्पार्थिवसत्तमान् ॥ ३६ ॥ कोसलस्यनृपस्याथपुत्रीसर्वाङ्गशोभना ॥ कौसल्यानामतांकन्यामुप
येमेसपार्थिवः ॥ ३७ ॥ मागधस्यनृपस्याथतनयाचशुचिस्मिता ॥ सुमित्रानामनाम्नाचद्वितीयातस्यभामिनी ॥ ३८ ॥ तृतीयाकेकयस्याथनृपतेर्दुहि
तातथा ॥ भार्याभूत्पद्मपत्राक्षीकैकेयीनामनामतः ॥३९॥ ताभिःस्मराजाभार्याभिस्तिसृभिर्धर्मसंयुतः ॥ रमयामासकाकुत्स्थःपृथिवींचानुपालयन् ॥
॥ ४० ॥ अयोध्यानामनगरीसरयूतीरसंस्थिता ॥ सर्वरत्नसुसंपूर्णाधनधान्यसमाकुला ॥ ४१ ॥ प्राकारगोपुरैर्जुष्टाहेमप्राकारसङ्कुला ॥ उत्तमैर्गाग
तुरगैर्महेन्द्रस्ययथापुरी ॥ ४२ ॥ तस्यांराजासधर्मात्माउवासमुनिसत्तमैः ॥ पुरोहितेनविप्रेणवसिष्ठेनमहात्मना ॥ ४३ ॥ राज्यंचकारयामाससर्वं
निहतकण्टकम् ॥ यस्मादुत्पत्स्यतेतस्यांभगवान्पुरुषोत्तमः ॥४४॥ तस्मात्तुनगरीपुण्यासाप्ययोध्येतिकीर्तिता ॥ नगरस्यपरंधाम्नोनामतस्याप्य
भूच्छुभे ॥ ४५ ॥ यत्रास्तेभगवान्विष्णुस्तदेवपरमंपदम् ॥ तत्रसद्योभवेन्मोक्षःसर्वकर्मनिकृन्तनः ॥ ४६ ॥ जातेतत्रमहाविष्णौनराःसर्वेमुदंययुः ॥
सराजापृथिवींसर्वांपालयित्वाशुभानने ॥ ४७ ॥ अयजद्वैष्णवंयज्ञंपुत्रार्थीहरिमच्युतम् ॥ तेनसंपूजितःश्रीशोराज्ञासर्वगतोहरिः ॥ ४८ ॥
वैष्णवंतुयज्ञेनवरदःप्राहकेशवः ॥ तस्मिन्नाविरभूदग्नौयज्ञरूपोहरिस्तदा ॥ ४९॥ शुद्धजाम्बूनदप्रख्यःशङ्खचक्रगदाधरः ॥ शुक्लाम्बरधरःश्रीमान्सर्व
भूषणभूषितः ॥ ५० ॥ श्रीवत्सकौस्तुभोरस्कोवनमालाविभूषितः ॥ पद्मपत्रविशालाक्षश्चतुर्बाहुरुदारधीः ॥५१॥ सख्याङ्कस्थश्रियासार्द्धमाविरासी
द्रमेश्वरः ॥ वरदोऽस्मीतितंप्राहराजानंभक्तवत्सलः ॥ ५२ ॥ तंदृष्ट्वासर्वलोकेशंराजाहर्षसमाकुलः ॥ ववन्देभार्ययासार्द्धंप्रहृष्टेनान्तरात्मना
॥५३॥प्राञ्जलिःप्रणतोभूत्वाहर्षगद्गदयागिरा॥पुत्रत्वंमेमजेत्याहदेवदेवंजनार्दनम्॥ततःप्रसन्नोभगवान्प्राहराजानमच्युतः ॥ ५४ ॥ विष्णुरुवाच॥उत्प
त्स्येऽहंनृपश्रेष्ठदेवलोकहितायवै ॥ परित्राणायसाधूनांराक्षसानांवधायच ॥ मुक्तिप्रदातुंलोकानांधर्मसंस्थापनायच ॥ ५५ ॥ महादेवउवाच ॥ इत्यु
क्त्वापायसंदिव्यंहेमपात्रस्थितंशृतम्॥लक्ष्म्याहस्तस्थितंशुभ्रंपार्थिवायददौहरिः ॥५६ ॥ विष्णुरुवाच ॥ इदंवैपायसंराजन्पत्नीभ्यस्तवसुव्रत ॥ देहि

तेतनयास्तासुउत्पत्स्यन्तेमदंशजाः ॥ ५७ ॥ महादेवउवाच ॥ इत्युक्त्वामुनिभिःसर्वैःस्तूयमानोजनार्दनः ॥ स्वात्मानंदर्शयित्वाथतथैवान्त
रधीयत ॥५८॥ सगजातत्रदृष्ट्वा चपत्नींज्येष्ठांकनीयसीम् ॥ विभज्यपायसंदिव्यंप्रददौसुसमाहितः ॥५९॥ एतस्मिन्नन्तरेपत्नीसुमित्रातस्यमध्यमा ॥
तत्समीपंप्रयातासापुत्रकामासुलोचना ॥ ६० ॥ तांदृष्ट्वातत्रकौसल्याकैकेयीचसुमध्यमा ॥ अर्द्धमर्द्धंप्रददतुस्तेतस्यैपायसंस्वकम् ॥ ६१ ॥ तत्प्राश्य
पायसंदिव्यंराजपत्न्यःसुमध्यमाः ॥ संपन्नगर्भाःसर्वास्ताविरेजुःशुभ्रवर्चसः ॥ ६२ ॥ तासांस्वप्नेषुदेवेशःपीतवासाजनार्दनः ॥ शङ्खचक्रगदापाणि
राविर्भूतस्तदाहरिः ॥६३ ॥ अथकालेमनोरम्येमधुमासिशुचिस्मिते ॥ शुक्लेनवम्यांविमलेनक्षत्रेऽदितिदैवते ॥ ६४ ॥ मध्याह्नसमयेलग्नेसर्वग्रह
शुभान्विते ॥ कौसल्याजनयामासपुत्रंलोकेश्वरंहरिम् ॥ ६५ ॥ इन्दीवरदलश्यामंकोटिकन्दर्पसन्निभम् ॥ पद्मपत्रविशालाक्षंसर्वाभरणशोभितम् ॥
॥ ६६ ॥ श्रीवत्सकौस्तुभोरस्कंसर्वाभरणभूषितम् ॥ उद्यद्दिनकरप्रख्यकुण्डलाभ्यांविराजितम् ॥ ६७ ॥ अनेकसूर्यसङ्काशंतेजसामहतावृतम् ॥ परे
शस्यतनोरम्यंदीपादुत्पन्नदीपवत् ॥ ६८ ॥ ईशानंसर्वलोकानांयोगिध्येयंसनातनम् ॥ सर्वोपनिषदामर्थममन्तंपरमेश्वरम् ॥६९॥ जगत्सर्गस्थितिल
येहेतुभूतमनामयम् ॥ शरण्यंसर्वभूतानांसर्वभूतमयंविभुम् ॥ ७० ॥ समुत्पन्नेजगन्नाथेदेवदुन्दुभयोदिवि ॥ विनेदुःपुष्पवर्षाणिववृषुःसुरसत्तमाः ॥
॥ ७१ ॥ प्रजापतिमुखादेवाविमानस्थानभस्तले ॥ तुष्टुवुर्मुनिभिःसार्द्धंहर्षपूर्णाङ्गविह्वलाः ॥ ७२ ॥ जगुर्गन्धर्वपतयोननृतुश्चाप्सरोगणाः ॥ ववुः
पुण्यशिवावाताःसुप्रभोऽभूद्दिवाकरः ॥ ७३ ॥ जज्वलुश्चाग्नयःशान्ताविमलाश्चदिशोदश ॥ ततस्सराजाहर्षेणपुत्रंदृष्ट्वासनातनम् ॥ ७४ ॥ पुरोधसा
वसिष्ठेनजातकर्मतदाकरोत् ॥ नामचास्मैददौरम्यंवसिष्ठोभगवांस्तदा ॥ ७५ ॥ श्रियःकमलवासिन्यारमणोऽयंमहान्प्रभुः ॥ तस्माच्छ्रीरामइत्यस्य
नामसिद्धंपुरातनम् ॥ ७६ ॥ सहस्रनाम्नांश्रीशस्यतुल्यंमुक्तिप्रदंनृणाम् ॥ विष्णुमासेसमुत्पन्नोविष्णुरित्यभिधीयते ॥ ७७ ॥ एवंनामास्यदत्त्वाथ
वसिष्ठोभगवानृषिः ॥ परिणीयनमस्कृत्यस्तुत्वास्तुतिभिरेवच ॥७८॥ संकीर्त्यनामसाहस्रंमङ्गलार्थंमहात्मनः ॥ विनिर्ययौमहातेजास्तस्मात्पुण्य
तमाद्गृहात् ॥ ७९ ॥गजाश्वविप्रमुख्येभ्योददौबहुधनंमुदा ॥ गवामयुतदानंचकारयामासधर्मतः ॥८०॥ ग्रामाणांशतसाहस्रंददौरघुकुलोत्तमः ॥
वस्त्रैराभरणैर्दिव्यैरसङ्ख्येयैर्धनैरपि ॥ ८१ ॥ विष्णोस्संतुष्टयेतत्रतर्पयामासभूसुरान् ॥ कौसल्याचसुतंदृष्ट्वारामंराजीवलोचनम् ॥ ८२ ॥ फुल्लहस्तार
विन्दाभंपद्महस्ताम्बुजान्वितम् ॥ तस्यश्रीपादकमलेपद्माब्जेचवरानने ॥ ८३ ॥ शङ्खचक्रगदापद्मध्वजवज्रादिचिह्नितं ॥ दृष्ट्वावक्षसिश्रीवत्संकौस्तुभं
वनमालया ॥ ८४॥ तस्याङ्गेसाजगत्सर्वंसदेवासुरमानुषम् ॥ स्मितवक्त्रेविशालाक्षीभुवनानिचतुर्दश ॥ ८५ ॥ निःश्वासेतस्यवेदांश्चसेतिहासान्म

हात्मनः ॥ द्वीपानर्व्वीन्गिरींस्तस्यजघनेवरवर्णिनि ॥ ८६ ॥ नाभ्यांब्रह्मशिवौतस्यकर्णयोश्चदिशःशुभाः ॥ नेत्रयोर्वह्निसूर्यौचघ्राणेवायुंमहाजवम् ॥८७॥ सर्वोपनिषदामर्थंदृष्ट्वातस्यविभूतयः ॥ कृत्स्नाभीतावरारोहाप्रणम्यचपुनपुनः ॥ हर्षाश्रुपूर्णनयनाप्राञ्जलिर्वाक्यमब्रवीत् ॥ ८८ ॥ कौसल्योवाच ॥ धन्यास्मिदेवदेवेशलब्ध्वात्वांतनयंप्रभो ॥ प्रसीदमेजगन्नाथपुत्रस्नेहंप्रदर्शय ॥ ८९ ॥ ईश्वरउवाच ॥ एवमुक्तोहृषीकेशोमात्रासर्वगतोहरिः ॥ मायामानुषतांप्राप्यशिशुभावाद्रुरोदसः ॥ ९० ॥ अथप्रमुदितादेवीकौसल्याशुभलक्षणम् ॥ पुत्रमालिङ्ग्यहर्षेणस्तन्यंप्रादात्सुमध्यमा ॥ ९१ ॥ तस्याःस्तन्यंपपौदेवोबालभावात्सनातनः ॥ उवासमातुरुत्सङ्गेजगद्भर्तामहाविभुः ॥९२॥तस्मिन्दिनेशुभेरम्येसर्वकामप्रदेनृणाम्॥उत्सवंचक्रिरेपौराहृष्टाजानपदानराः ॥९३॥ कैकेय्यांभरतोजज्ञेपाञ्चजन्यांशसम्भवः॥सुमित्राजनयामासलक्ष्मणंशुभलक्षणम् ॥९४॥ शत्रुघ्नंचमहाभागादेवशत्रुप्रतापनम् ॥ अनन्तांशेनसंभूतोलक्ष्मणःपरवीरहा ॥ ९५ ॥ सुदर्शनांशाच्छत्रुघ्नःसंजज्ञेऽमितविक्रमः ॥ तेसर्वेववृधुस्तत्रवैवस्वतमनोःकुले ॥९६॥ संस्कृतास्तेसुताःसम्यग्वसिष्ठेनमहौजसा ॥ अधीतवेदास्तेसर्वेश्रुतवन्तस्तथानृपाः ॥ ९७ ॥ सर्वशास्त्रार्थतत्त्वज्ञाधनुर्वेदेचनिष्ठिताः ॥ बभूवुःपरमोदारालोकानांहर्षवर्द्धनाः ॥ ९८ ॥ युग्मंबभूवतुस्तत्रराजानौरामलक्ष्मणौ ॥ तथाभरतशत्रुघ्नौपायसांशवशात्स्वतः ॥ ९९ ॥ अथलोकेश्वरीलक्ष्मीर्जनकस्यनिवेशने ॥ शुभक्षेत्रेहलोत्खातेसुनासासुशुभक्षेणा ॥ १०० ॥ बालार्ककोटिसङ्काशारक्तोत्पलकराम्बुजा ॥ सर्वलक्षणसंपन्नासर्वाभरणभूषिता ॥ १ ॥ धृत्वावक्षसिचार्वङ्गीमालामम्लानपङ्कजाम् ॥ सीतामुखेसमुत्पन्नाबालभावेनसुन्दरी ॥ २ ॥ तांदृष्ट्वाजनकोराजाकन्यांवेदमयींशुभाम् ॥ उद्धृत्यापत्यभावेनपुपोषमिथिलापतिः ॥ ३ ॥जनकस्यगृहेरम्येसर्वलोकेश्वरप्रिया ॥ ववृधेसर्वलोकस्यरक्षणार्थंसुरेश्वरी ॥४ ॥ एतस्मिन्नन्तरेदेविकौशिकोलोकविश्रुतः ॥ सिद्धाश्रमेमहापुण्येभागीरथ्यास्तटेशुभे ॥ ५ ॥क्रतुप्रवरमारेभेयष्टुंतत्रमहामुनिः ॥ वर्त्तमानस्यतस्यास्ययज्ञस्याथद्विजन्मनः ॥ ६ ॥ क्रतुविध्वंसिनोऽभूवन्रावणस्यनिशाचराः ॥ कौशिकश्चिन्तयित्वाथरघुवंशोद्भवंहरिम् ॥ ७ ॥ आनेतुमैच्छद्धर्मात्मालोकानांहितकाम्यया ॥ सगत्वानगरींरम्यामयोध्यांरघुपालिताम् ॥ ८ ॥ नृपश्रेष्ठंदशरथंददर्शमुनिसत्तमः ॥ राजापिकौशिकंदृष्ट्वाप्रत्युत्थायकृताञ्जलिः ॥ ९ ॥ पुत्रैःसहमहातेजाववन्देमुनिसत्तमम् ॥ धन्योऽहमस्मीतिवदन्हर्षेणरघुनन्दनः ॥ ११० ॥ अर्चयामासविधिनानिवेश्यपरमासने ॥ परिणीयनमस्कृत्यकिंकरोमीत्युवाचतम् ॥ ११ ॥ ततःप्रोवाचहृष्टात्माविश्वामित्रोमहातपाः ॥ १२ ॥ विश्वामित्रउवाच ॥ देहिमेराघवंराजन्रक्षणार्थंक्रतोर्मम ॥ साफल्यमस्तुमेयज्ञेराघवस्यसमीपतः ॥ तस्माद्रामंरक्षणार्थंदातुमर्हसिभूपते ॥ १३ ॥ ईश्वरउवाच ॥ तच्छ्रुत्वामुनिवर्यस्यवाक्यंसर्वविदांवरः ॥ प्रददौमुनिवर्याय

राघवंसहलक्ष्मणम् ॥ १४ ॥ आदायराघवौतत्रविश्वामित्रोमहातपाः ॥ स्वमाश्रममतिप्रीतःप्रययौद्विजसत्तमः ॥ १५ ॥ ततःप्रहृष्टास्त्रिदशाः प्रयातेरघुसत्तमे ॥ ववृषुःपुष्पवर्षाणितुष्टुवुश्चमहौजसः ॥ १६ ॥ अथाजगामहृष्टात्मावैनतेयोमहाबलः ॥ अदृश्यस्सर्वभूतानांसंप्राप्यरघुसत्तमौ ॥१७॥ ताभ्यांदिव्येचधनुषीतूणौचाक्षयसायकौ ॥ दिव्यान्यस्त्राणिशस्त्राणिदत्त्वाचप्रययौद्विजः ॥१८॥ तौरामलक्ष्मणौवीरौकौशिकेनसहाध्वनि ॥ गच्छन्तौविपिनेघोरेराक्षसींघोरदर्शनाम् ॥ १९ ॥ नाम्नातुताटकांदेविभार्यांसुन्दस्यरक्षसः ॥ जघ्नतुस्तौमहावीरौबाणैर्दिव्यधनुश्च्युतैः ॥ १२० ॥ निहताराघवेणाथराक्षसीघोरदर्शना ॥ त्यक्त्वातनुंघोररूपांदिव्यरूपाबभूवसा ॥.२१ ॥ जाज्वल्यमानावपुषासर्वाभरणभूषिता ॥ प्रययौवैष्णवं लोकंप्रणम्यचरघूत्तमौ ॥ २२ ॥ तांहत्वाराघवःश्रीमान्कौशिकस्याश्रमंशुभम् ॥ प्रविवेशमहातेजालक्ष्मणेनमहात्मना ॥ २३ ॥ ततःप्रहृष्टामुन यःप्रत्युद्गम्यरघूत्तमम् ॥ निवेश्यपूजयामासुरर्घाद्यैःपरमासने ॥ २४ ॥ कौशिकःकृतदीक्षस्तुयष्टुंयज्ञमनुत्तमम् ॥ आरेभेमुनिभिःसार्द्धंविधिनामुनि सत्तमः ॥ २५ ॥ वर्त्तमानेमहायज्ञेमारीचोनामराक्षसः ॥ भ्रात्रासुबाहुनातत्रविघ्नंकर्तुमवस्थितः ॥ २६॥ दृष्ट्वातौराक्षसौघोरौराघवःपरवीरहा ॥ जघा नैकेनबाणेनसुबाहुंराक्षसेश्वरम् ॥ २७ ॥ पवनास्त्रेणमहतामारीचंतुनिशाचरम् ॥ सागरेपातयामासशुष्कपर्णमिवानिलः ॥ २८ ॥ सरामस्यमहा वीर्यंदृष्ट्वाराक्षससत्तमः ॥ न्यस्तशस्त्रस्तपस्तप्तुंप्रययौमहदाश्रमम् ॥ २९ ॥ विश्वामित्रोमहातेजाःसमातेमहतिक्रतौ ॥ प्रहृष्टमनसातत्रपूजयामास राघवम् ॥ १३० ॥ समाश्लिष्यमहात्मानंकाकपक्षधरंहरिम् ॥ नीलोत्पलदलश्यामंपद्मपत्रायतेक्षणम् ॥ ३१ ॥उपाघ्रायतदामूर्ध्नितुष्टावमुनिसत्तमः ॥ एतस्मिन्नन्तरेराजामिथिलायाअधीश्वरः ॥ ३२ ॥ वाजपेयंक्रतुंयष्टुमारेभेमुनिसत्तमैः ॥ तंद्रष्टुंप्रययुस्सर्वेविश्वामित्रपुरोगमाः ॥ ३३ ॥ मुनयो रघुशार्दूलसहिताःपुण्यचेतसः ॥ गच्छतस्तस्यरामस्यपादाब्जेनमहात्मनः ॥ ३४ ॥ अभूत्सुरूपावनितास्समाक्रान्तामहाशिला ॥ सापिशप्तापुरा भर्त्रागौतमेनद्विजन्मना॥३५॥अहल्यारघुनाथस्यपादस्पर्शाच्छुभाभवत्॥अथसंप्राप्यनगरींमिथिलांमुनिसत्तमाः॥ ३६ ॥राघवाभ्यांतुसहितात्रभूवुः प्रीतमानसाः ॥ समागतान्महाभागान्दृष्ट्वाराजामहाबलः ॥ ३७ ॥ प्रत्युद्गम्यप्रणम्याथपूजयामासमैथिलः ॥ रामंपद्मविशालाक्षमिन्दीवरदलप्रभम ॥ ३८ ॥ पीताम्बरधरंश्लक्ष्णंकोमलावयवोज्ज्वलम् ॥ अवधीरितकन्दर्पकोटिलावण्यमुत्तमम् ॥ ३९ ॥ सर्वलक्षणसम्पन्नंसर्वाभरणभूषितम् ॥ स्वस्य हृत्पङ्कजेध्येयंपरेशस्यतनोर्हरेः ॥१४० ॥ उत्पन्नंदीपवद्दीपात्सौशील्यगुणसागरम् ॥ तंदृष्ट्वारघुनाथंसजनकोहृष्टमानसः ॥ ४१ ॥. परेशमेवतंमेने रामंदशरथात्मजम् ॥ पूजयामासकाकुत्स्थंधन्योऽस्मीतिब्रुवन्नृपः ॥४२॥ प्रसादंवासुदेवस्यविष्णोर्मेनेनरेश्वरः ॥ प्रदातुंदुहितांतस्मैमनसाचिन्तय

न्प्रभुः ॥ ४३॥ आत्मजौरघुवंशस्यज्ञात्वातत्रनृपोत्तमः॥पूजयामासधर्मेणवस्त्राभरणैःशुभैः॥४४॥ ऋषीन्समर्चयामासमधुपर्कादिपूजनैः॥ततोऽवसा
नेयज्ञस्यरामोराजीवलोचनः॥४५॥भंक्त्वाशैवंधनुर्दिव्यंजितवाञ्जनकात्मजाम्॥अथासौवीर्यशुल्केनमहतापरितोषितः॥४६॥ मुदाधरणिजांतस्मै
प्रददौमिथिलाधिपः॥केशवायश्रियमिवयथापूर्वंमहार्णवः॥ ४७॥सदूतंप्रेषयामासराघवंमिथिलाधिपः ॥ पुत्राभ्यांसहधर्मात्मामिथिलायांविवेशह
॥४८॥वसिष्ठवामदेवाद्यैःप्रीतैःसहमहीपतिः ॥ उवासनगरेरम्येजनकस्यरघूत्तमः॥४९॥तस्मिन्नेवशुभेकालेरामस्यधरणीसुताम् ॥ विवाहमकरोद्राजा
मैथिलेनसमर्चितः ॥ १५० ॥ लक्ष्मणस्योर्मिलांनामकन्यांजनकसंभवाम् ॥ जनकस्यानुजस्याथतनयंशुभवर्चसौ ॥ ५१ ॥ माण्डवीश्रुतकीर्तिश्च
सर्वलक्षणलक्षिते ॥ भरतस्यचसौमित्रेर्विवाहमकरोन्नृपः ॥५२ ॥ निर्वर्त्यौद्वाहिकंतत्रराजादशरथोबली ॥अयोध्यांप्रस्थितःश्रीमान्पौरैर्जानपदैर्वृतः
॥ ५३ ॥ पारिवर्हंसमादायमैथिलेनचपूजितः ॥ ससुतःसस्नुषःसाश्वःसगजःसबलानुगः ॥ ५४ ॥ तदध्वनिमहावीर्योजामदग्न्यःप्रतापवान् ॥
गृहीत्वापरशुंचापंसंक्रुद्धइवकेसरी ॥ ५५ ॥ अभ्यधावच्चकाकुत्स्थंयोद्धुकामोनृपान्तकः ॥ संप्राप्यराघवंदृष्ट्वावचनंप्राहभार्गवः ॥ ५६ ॥ परशुराम
उवाच ॥ रामराममहावाहोशृणुष्ववचनंमम ॥ वहुशःपार्थिवान्हत्वासंयुगेभूरिविक्रमान् ॥ ५७ ॥ ब्राह्मणेभ्योमहींदत्त्वातपस्तप्तुमहंगतः ॥ तववीर्यवलं
श्रुत्वात्वयायोद्धुमिहागतः॥५८॥इक्ष्वाकवोनवध्यामेमातामहकुलोद्भवाः॥वीर्यंक्षत्रबलंश्रुत्वानशक्यंसहितुंमम॥५९॥ रौद्रंचापंदुराधर्षंभज्यंमानंत्वया
नृप ॥ तस्माद्ददान्ययुद्धंमेदीयतांरघुसत्तम ॥१६०॥ इदंतुवैष्णवंचापंतेनतुल्यमरिन्दम ॥ आरोपयस्ववीर्येणनिर्जितोऽस्मित्वयैवहि ॥६१॥ अथवा
त्यजशस्त्राणिपुरस्ताद्बलिनोमम ॥ शरणंभजकाकुत्स्थकातरोऽस्यपिचेदिह ॥ ६२ ॥ ईश्वरउवाच ॥ एवमुक्तस्तुकाकुत्स्थोभार्गवेणप्रतापवान् ॥
तच्चापंतस्यजग्राहतच्छक्तिंवैष्णवीमपि ॥६३॥ शक्त्यावियुक्तस्सतदाजामदग्न्यःप्रतापवान्॥निर्वीर्योनष्टतेजाश्चकर्महीनोयथाद्विजः ॥६४॥ विनष्टतेज
संदृष्ट्वाभार्गवंनृपसत्तमाः ॥ साधुसाध्वितिकाकुत्स्थंप्रशशंसुर्मुहुर्मुहुः ॥ ६५ ॥ काकुत्स्थस्तन्महच्चापंगृहीत्वारोप्यलीलया ॥ संधायबाणंतच्चापेभा
र्गवंप्राहविस्मितम् ॥ ६६ ॥ रामउवाच ॥ अनेनशरमुख्येणकिंकर्त्तव्यंमयाद्विज ॥ छेद्मिलोकद्वयंचापिस्वर्गंवाहन्मितेद्विज ॥ ६७ ॥ ईश्वर
उवाच ॥ तंदृष्ट्वाघोरसङ्काशंबाणंरामस्यभार्गवः ॥ ज्ञात्वातंपरमात्मानंप्रहृष्टोराममब्रवीत् ॥ ६८ ॥ परशुरामउवाच ॥ राममममहा
बाहोनवेद्मित्वांसनातनम् ॥ जानाम्यद्यैवकाकुत्स्थतववीर्यगुणादिभिः ॥ ६९ ॥ त्वमादिपुरुषःसाक्षात्परंब्रह्मपरोऽव्ययः ॥ त्वमनन्तोमहाविष्णु
र्वासुदेवःपरात्परः ॥१७०॥ नारायणस्त्वंश्रीशस्त्वमीश्वरस्त्वंत्रयीमयः ॥ त्वंकालस्त्वंजगत्सर्वमकाराख्यस्त्वमेवच ॥ ७१ ॥ स्रष्टाधाताचसंहर्त्तात्वमेव

परमेश्वरः ॥ त्वमचिन्त्योमहद्भूतंविश्वरूपस्त्वणुर्महान् ॥७२॥ चतुःषट्पञ्चगुणवांस्त्वमेवपुरुषोत्तमः ॥ त्वंयज्ञस्त्वंवषट्कारस्त्वमोङ्कारस्त्रयीमयः
॥ ७३ ॥ व्यक्ताव्यक्तस्वरूपस्त्वंगुणभृन्निर्गुणःपरः ॥ स्तोतुंत्वाहमशक्तश्चवेदानामप्यगोचरम् ॥ ७४ ॥ यच्चापमानंकृतवांस्त्वांयुयुत्सु
तयाप्रभो ॥ तत्क्षन्तव्यंत्वयानाथकृपयाकेवलेनतु ॥ ७५ ॥ तवशक्त्यानृपान्सर्वाञ्जित्वादत्त्वामहींद्विजान् ॥ त्वत्प्रसादवशादेवशान्तिमाप्नोमि
नैष्ठिकीम् ॥ ७६ ॥ ईश्वरउवाच ॥ एवमुक्त्वातुकाकुत्स्थंजामदग्न्योमहातपाः ॥ परिणीयनमस्कृत्याराघवंलोकरक्षकम् ॥ ७७ ॥ शतक्रतु
कृतंस्वर्गंतदस्त्रायान्यवेदयत् ॥ राघवोऽथमहातेजाववन्देतंमहामुनिम् ॥ ७८ ॥ विधिवत्पूजयामासपाद्यार्घ्याचमनादिभिः ॥ तेनसंपूजित
स्तत्रजामदग्न्योमहातपाः ॥ ७९ ॥ तपस्तप्तुंययौरम्यंनरनारायणाश्रमम् ॥ राजादशरथःसोऽथपुत्रैर्दारसमन्वितैः ॥ १८० ॥ स्वांपुरीं
सुमुहूर्तेनप्रविवेशमहाबलः ॥ राघवोलक्ष्मणश्चैवशत्रुघ्नोभरतस्तथा ॥ ८१ ॥ स्वान्स्वान्दारानुपागम्यरेमिरेहृष्टमानसाः ॥ तत्रद्वादशवर्षाणि
सीतयासहराघवः ॥८२॥ रमयामासधर्मात्मानारायणइवश्रिया ॥ तस्मिन्नेवतुराजाथकालेदशरथःसुतम् ॥८३॥ ज्येष्ठंराज्येनसंयोक्तुमैच्छत्प्रीत्यामही
पतिः ॥ तस्यभार्याथकैकेयीपुरादत्तवराप्रिया ॥ ८४ ॥ अयाचतनृपश्रेष्ठंभरतस्याभिषेचनम् ॥ विवासनंचरामस्यवत्सराणिचतुर्दश ॥ ८५ ॥
सराजासत्यवचनाद्रामंराज्यादहोसुतम् ॥ विवासयामासतदादुःखेनहतचेतनः ॥८६॥ शक्तोऽपिराघवस्तस्मिन्राज्यंसंत्यज्यधर्मतः ॥ दशग्रीववधार्थाय
पितुर्वचनहेतुना ॥ ८७ ॥ वनंजगामकाकुत्स्थोलक्ष्मणेनचसीतया ॥ राजापुत्रवियोगार्त्तःशोकेनचममारसः ॥ ८८ ॥ नियुज्यमानोभरतस्तस्मिन्रा
ज्येसमन्त्रिभिः ॥ नैच्छद्राज्यंसधर्मात्मासौभ्रात्रमनुदर्शयन् ॥ ८९ ॥ वनमागम्यकाकुत्स्थमयाचद्भ्रातरंततः ॥ रामस्तुपितुरादेशान्नैच्छद्राज्यमरि
न्दमः ॥ १९० ॥ स्वपादुकेददौतस्मैभक्त्यासोऽप्यग्रहीत्तथा ॥ रामस्यपादुकेराज्यमवाप्यभरतःशुभे ॥ ९१ ॥ प्रत्यहंगन्धपुष्पैश्चपूजयन्कैकयीसुतः ॥
तपश्चरणयुक्तेनतस्मिंस्तस्थौनृपोत्तमः ॥ ९२ ॥ यावदागमनंतस्यराघवस्यमहात्मनः ॥ तावद्व्रतपराःसर्वेवभूवुःपुरवासिनः ॥ ९३ ॥ राघवश्चित्रकूटा
द्रौभरद्वाजाश्रमेशुभे ॥ रमयामासवैदेहीमन्दाकिन्याजलेशुभे ॥ ९४ ॥ कदाचिदङ्केवैदेह्याःशेतेरामोमहामनाः ॥ ऐन्द्रिःकाकस्समागम्यतस्मिन्नेव
चचारह ॥ ९५ ॥ सदृष्ट्वाजानकींतत्रकन्दर्पशरपीडितः ॥ विददारनखैस्तीक्ष्णैःपीनोन्नतपयोधरम् ॥ ९६ ॥ तंदृष्ट्वावायसंरामःकुशंजग्राहपाणिना ॥
ब्रह्मणोऽस्त्रेणसंयोज्यचिक्षेपधरणीधरः ॥ ९७ ॥ तत्तृणंघोरसङ्काशंज्वालारचितविग्रहम् ॥ दृष्ट्वाकाकःप्रदुद्रावविमुञ्चन्कातरंस्वरम् ॥ ९८ ॥ तंकाकं
प्रत्यनुययौरामस्यास्त्रंसुदारुणम् ॥ वायसस्त्रिषुलोकेपुनश्चाभयपीडितः ॥९९॥ यत्रयत्रययौकाकःशरणार्थीसवायसः ॥ तत्रतत्रतदस्त्रंतुप्रविवेशभयाव

हम् ॥ २०० ॥ ब्रह्माणमिन्द्रंरुद्रंचयमंवरुणमेवच ॥ शरणार्थीजगामाशुवायसःशस्त्रपीडितः ॥ १॥ तंदृष्ट्वावायसंसर्वेरुद्राद्यादेवदानवाः ॥ नशक्ताः
स्मोवयंत्रातुमितिप्राहुर्मनीषिणः ॥ अथेप्रोवाचभगवान्ब्रह्मात्रिभुवनेश्वरः ॥ २ ॥ ब्रह्मोवाच ॥ भोभोबलिभुजांश्रेष्ठतमेवशरणंव्रज ॥ सएवरक्षकः
श्रीमान्सर्वेषांकरुणानिधिः ॥ ३ ॥ रक्षत्येवक्षमासारोवत्सलश्शरणागतान् ॥ ईश्वरःसर्वभूतानांसौशील्यादिगुणान्वितः ॥ ४ ॥ रक्षिताजीवलोकस्य
पितामातासखासुहृत् ॥ शरणंव्रजदेवेशंनान्यत्रशरणंद्विज ॥ ५ ॥ महादेवउवाच ॥ इत्युक्तस्तेनबलिभुग्ब्रह्मणारघुनन्दनम् ॥ उपेत्यसहसाभूमौनिप
पातभयातुरः ॥ ६ ॥ प्राणसंशयमापन्नंदृष्ट्वासीताथवायसम् ॥ त्राहित्राहीतिभर्तारमुवाचविनयाद्विभुम् ॥ ७ ॥ पुरतःपतितंदेवीधरण्यांवायसंतदा॥
तच्छिरःपादयोस्तस्ययोजयामासजानकी ॥ ८ ॥ समुत्थाप्यकरेणाथकृपापीयूषसागरः ॥ ररक्षरामोगुणवान्वायसंदययार्दितः ॥ ९ ॥ तमा
हवायसंरामोमाभैरितिदयानिधिः ॥ अभयंतेप्रदास्यामिगच्छगच्छयथासुखम् ॥ २१० ॥ प्रणम्यराघवायाथसीतायैचमुहुर्मुहुः ॥ स्वर्लोकंप्रययौ
वाशुराघवेणचरक्षितः ॥ ११ ॥ ततोरामस्तुवैदेह्यालक्ष्मणेनचधीमता ॥ उवासचित्रकूटाद्रौस्तूयमानोमहर्षिभिः ॥ १२ ॥ तस्मिन्संपूज्यमानस्तुभर
द्वाजेनराघवः ॥ जगमात्रेस्सुविपुलमाश्रमंरघुसत्तमः ॥ १३ ॥ समागतंरघुवरंदृष्ट्वामुनिवरोत्तमः ॥ भार्ययासहधर्मात्माप्रत्युद्गम्यमुदायुतः ॥ १४ ॥
आसनेसुशुभेमुख्येनिवेश्यसहसीतया ॥ अर्घ्यंपाद्यंतथाचामंवस्त्राणिविविधानिच ॥ १५ ॥ मधुपर्कंददौप्रीत्याभूषणंचानुलेपनम् ॥ तस्यपत्न्य
नसूयातुदिव्यांम्बरमनुत्तमम् ॥ १६ ॥ सीतायैप्रददौप्रीत्याभूषणानिद्युमन्तिच ॥ दिव्यान्नपानभक्ष्याद्यैर्भोजयामासराघवम् ॥ १७ ॥ तेनसंपूजित
स्तत्रभक्त्यापरमयानृपः ॥ उवासदिवसंतत्रप्रीत्यारामस्सलक्ष्मणः ॥ १८ ॥ प्रभातविमलेरामःसमुत्थायमहामुनिम् ॥ परिणीयप्रणम्याथगमना
योपचक्रमे ॥ १९ ॥ अनुज्ञातस्ततस्तेनगमोराजीवलोचनः ॥ प्रययौदण्डकारण्यंमहर्षिकुलसङ्कुलम् ॥ २२० ॥ तत्रातिभीषणंघोरंविराधंनाम
राक्षसम् ॥ हत्वाथशरभङ्गस्यप्रविवेशाश्रमंशुभम् ॥ २१ ॥ सतुदृष्ट्वाथकाकुत्स्थंसद्यःसंक्षीणकल्मषः ॥ प्रययौब्रह्मलोकंतुगन्धर्वाप्सरसान्वितम्
॥ २२ ॥ सुतीक्ष्णस्याप्यगस्त्यस्यह्यगस्त्यभ्रातुरेवच ॥ क्रमेणप्रययौरामस्तैश्चसंपूजितस्तथा ॥ २३ ॥पञ्चवटयांततोरामोगोदावर्यास्तटेशुभे ॥उवास
सुचिरंकालंसुखेनपरमेणच ॥ २४ ॥ तत्रगत्वामुनिश्रेष्ठास्तापसाधर्मचारिणः ॥ पूजयामासुरात्मेशंरामंराजीवलोचनम् ॥ २५ ॥ भयंविज्ञापया
मासुस्तस्यरक्षोगणोत्थितम् ॥ तानाश्वास्यतुकाकुत्स्थोददौचाभयदक्षिणाम् ॥ २६ ॥ तेतुसंपूजितास्तेनस्वाश्रमान्संप्रपेदिरे ॥ तस्मिंस्त्रयोदशाब्दा
निरामस्यपरिनिर्ययुः ॥ २७ ॥ गोदावर्यास्तटेरम्येपञ्चवटयांमनोरमे ॥ कस्यचित्त्वथकालस्यराक्षसीघोररूपिणी ॥ २८॥रावणस्यस्वसातत्रप्रविवेश

दुरासदा ॥ सातुदृष्ट्वारघुवरंकोटिकन्दर्पसन्निभम् ॥ २९ ॥ इन्दीवरदलश्यामंपद्मपत्रायतेक्षणम् ॥ प्रोन्नतांसंमहाबाहुंकम्बुग्रीवंमहाहनुम् ॥ २३० ॥
संपूर्णचन्द्रसदृशसस्मिताननपङ्कजम् ॥ भृङ्गावलिनिभैःस्निग्धैःकुटिलैःशीर्षजैर्वृतम् ॥ ३१ ॥ रक्तारविन्दसदृशपद्महस्ततलाङ्कितम् ॥ निष्कलङ्केन्दु
सदृशनखपङ्क्तिविराजितम् ॥ ३२ ॥ स्निग्धकोमलदूर्वाभंसौकुमार्यनिधिंशुभम् ॥ पीतकौशेयवसनंसर्वाभरणभूषितम् ॥ ३३ ॥ युवाकुमारवयसं
जगन्मोहनविग्रहम्॥दृष्ट्वातंराक्षसीरामंकन्दर्पशरपीडिता ॥ अब्रवीत्समुपेत्याथरामंकमललोचनम् ॥ ३४ ॥ राक्षस्युवाच ॥ कस्त्वंतापसवेषेणवर्त्तसे
दण्डकावने ॥ आगतोऽसिकिमर्थंचराक्षसानांदुरासदं ॥ शीघ्रमाचक्ष्वतत्त्वेननानृतंवक्तुमर्हसि ॥३५॥ महेश्वरउवाच॥ इत्युक्तःसतदारामःसंप्रहस्या
ब्रवीद्वचः ॥ ३६ ॥ रामउवाच ॥ राज्ञोदशरथस्याहंपुत्रोरामइतीरितः ॥ असौमभ्रातानुजोधन्वीलक्ष्मणोनामचानघः ॥ ३७ ॥ पत्नीचेयंचमेसीता
जनकस्यात्मजाप्रिया ॥ पितुर्वचननिर्देशाद्दहंवनमिहागतः ॥ ३८ ॥ विचरामोमहारण्यमृषीणांहितकाम्यया ॥ आगतासिकिमर्थंत्वमाश्रमंमम
सुन्दरि ॥ कात्वंकस्यकुलेजातासर्वंसत्यंवदस्वमे ॥ ३९ ॥ महेश्वरउवाच ॥ इत्युक्तासातुरामंप्राहवाक्यमशङ्किता ॥ २४० ॥ राक्षस्युवाच ॥
अहंविश्रवसःपुत्रीरावणस्यस्वसानृप ॥ नाम्नाशूर्पणखानामत्रिपुलोकेपुविश्रुता ॥ ४१ ॥ इदंचदण्डकारण्यंभ्रात्रादत्तंममप्रभो ॥ भक्षयन्त्यृषिसङ्घा
न्वैविचरामिमहांवने ॥ ४२ ॥ त्वांतुदृष्ट्वामुनिवरंकन्दर्पशरपीडिता ॥ रन्तुकामात्वयासार्धमागतास्मिसुनिर्भया ॥ ४३ ॥ ममत्वंनृपशार्दूलभर्ता
भवितुमर्हसि ॥ इमांतवसतींसीतांभक्षयिष्यामिपार्थिव॥४४॥वनेषुगिरिमुख्येषुविचारामित्वयासह ॥ ४५॥ महेश्वरउवाच ॥ इत्युक्त्वाराक्षसीसीतां
ग्रसितुंवीक्ष्यचोद्यताम् ॥ श्रीरामःखड्गमुद्यम्यनासाकर्णौप्रचिच्छिदे ॥ ४६ ॥ रुदन्तीसभयंशीघ्रंराक्षसीविकृतानना ॥ खरालयंप्रविश्याहतस्य
रामस्यचेष्टितम् ॥ ४७ ॥ सतुराक्षससाहस्रैर्दूषणत्रिशिरोवृतः ॥ आजगामभृशंयोद्धुंराघवंशत्रुसूदनम् ॥ ४८॥ तान्रामःकाननेघोरैर्बाणैःकालान्त
कोपमैः ॥ निजघानमहाकायान्राक्षसांस्तत्रलीलया ॥ ४९ ॥ खरंत्रिशिरसंचैवदूषणंतुमहाबलम् ॥ रणेनिपातयामासबाणैराशीविषोपमैः॥
॥ २५० ॥ निहत्यराक्षसान्सर्वान्दण्डकारण्यवासिनः ॥ पूजितःसुरसङ्घैश्चस्तूयमानोमहर्षिभिः॥ ५१ ॥ उवासदण्डकारण्येसीतयालक्ष्मणेनच ॥
राक्षसानांवधंश्रुत्वारावणःक्रोधमूर्च्छितः ॥ ५२ ॥ आजगामजनस्थानंमारीचेनदुरात्मना ॥ संप्राप्यपञ्चवटींतांतुदशग्रीवःस्वमक्षसः ॥
॥ ५३ ॥ मायाविनामारीचेनमृगरूपेणराक्षसः ॥ अपहृत्याश्रमाद्दूरेतौतुदशरथात्मजौ ॥ ५४ ॥ जहारसीतांरामस्यभार्यांस्ववधका
ङ्क्षया ॥ ह्रियमाणांतुतांदृष्ट्वाजटायुर्गृध्रराड्बली ॥५५॥ रामस्यसौहृदात्तत्रयुयुधेतेनरक्षसा ॥ तंहत्वाबाहुवीर्येणरावणःशत्रुवारणः ॥५६ ॥ प्रविवेश

पुरींलङ्कांराक्षसैर्बहुभिर्वृताम् ॥ अशोकवनिकामध्येनिक्षिप्यजनकात्मजाम् ॥ ५७ ॥ निधनंरामबाणेनकाङ्क्षन्स्वगृहमाविशत ॥ रामस्तुराक्षसंहत्वा
मारीचंमृगरूपिणम् ॥५८॥ पुनराविश्यचात्राथभ्रात्रासौमित्रिणाततः ॥ राक्षसापहृतांभार्याज्ञात्वादशरथात्मजः ॥ ५९ ॥ प्रभूतशोकसंतप्तोविललापमहा
मतिः ॥ मार्गमाणोवनेसीतांपथिगृध्रंमहाबलम् ॥२६०॥ विच्छिन्नपादपक्षंचपतितंधरणीतले ॥ रुधिरापूर्णसर्वाङ्गंदृष्ट्वाविस्मयमागतः ॥६१॥ पप्रच्छ
राघवःश्रीमान्केनकिंत्वंजिघांसितः ॥ गृध्रस्तुराघवंदृष्ट्वामन्दम्मन्दमुवाचह ॥ ६२ ॥ गृध्रउवाच ॥ रावणेनहृतारामतवभार्याबलीयसा ॥ तेनराक्षसमु
ख्येनसङ्ग्रामेनिहतोऽस्म्यहम् ॥६३॥ महेश्वरउवाच ॥ इत्युक्काराघवस्याग्रेसोऽभवत्त्यक्तजीवितः ॥ संस्कारमकरोद्रामस्तस्यब्रह्मविधानतः ॥६४॥ स्व
पदंचददौतस्मैयोगिगम्यंसनातनम् ॥ राघवस्यप्रसादेनसगृध्रःपरमंपदम् ॥ ६५ ॥ हरेःसामान्यरूपेणमुक्तिंप्रापखगोत्तमः ॥ माल्यवन्तंततोगत्वामत
ङ्गस्याश्रमेशुभे ॥ ६६ ॥ अभ्यगच्छन्महाभागांशबरींधर्मचारिणीम् ॥ सातुभागवतश्रेष्ठादृष्ट्वातौरामलक्ष्मणौ ॥ ६७ ॥ प्रत्युद्गम्यनमस्कृत्यनिवेश्य
कुशविष्टरे ॥ पादप्रक्षालनंकृत्वावन्यैःपुष्पैःसुगन्धिभिः ॥६८॥ अर्चयामासभक्त्यावैहर्षनिर्भरमानसा ॥ फलानिचसुगन्धीनिमूलानिमधुराणिच ॥
॥६९॥ निवेदयामासतदाराघवाभ्यांदृढव्रता ॥ फलान्यास्वाद्यकाकुत्स्थस्तस्यैमुक्तिंददौपराम् ॥ २७० ॥ ततःक्रौञ्चवटींगत्वाराघवःशत्रुसूदनः ॥
जघानराक्षसंतत्रकबन्धंघोररूपिणम् ॥ ७१ ॥ तंनिहत्यमहावीर्योददाहस्वर्गतश्चसः ॥ ततोगोदावरींगत्वारामोराजीवलोचनः ॥७२॥ पप्रच्छसीतां
गङ्गेत्वंकिंतांजानासिमेप्रियाम् ॥ नशशंसतदातस्मैसागङ्गातमसावृता ॥ ७३ ॥ शशापराघवःक्रोधाद्रक्ततोयाभवेतिताम् ॥ ततोभयात्समुद्विग्ना
पुरस्कृत्यमहामुनीन् ॥ ७४ ॥ कृताञ्जलिपुटादीनाराघवंशरणंगता ॥ ततोमहर्षयस्सर्वेरामंप्राहुस्सनातनम् ॥ ७५ ॥ ऋषयऊचुः ॥ त्वत्पादकमलो
द्भूतागङ्गात्रैलोक्यपावनी ॥ त्वमेवहिजगन्नाथतांशापान्मोक्तुमर्हसि ॥ ७६ ॥ महेश्वरउवाच ॥ ततःप्रोवाचधर्मात्मारामःशरणवत्सलः ॥ ७७ ॥
रामउवाच ॥ शबर्याःस्नानमात्रेणसंगताशुभवारिणा ॥ मुक्ताभवतुमच्छापाद्गङ्गेयंपापनाशिनी ॥ ७८ ॥ एवमुक्त्वातुकाकुत्स्थःशबरीतीर्थमुत्त
मम् ॥ गङ्गयासङ्गतंचक्रेशार्ङ्गकोद्यामहाबलः ॥ ७९ ॥ महाभागवतानांचतीर्थंयस्योदरेऽभवत् ॥ तच्छरीरंजगद्वन्द्यंभविष्यतिनसंशयः ॥ २८० ॥
एवमुक्त्वातुकाकुत्स्थऋष्यमूकंगिरिंययौ ॥ ततःपम्पासरस्तीरेवानरेणहनूमता ॥ ८१ ॥ संगतस्तस्यवचनात्सुग्रीवेणसमागतः ॥ सुग्रीववचनाद्ध
त्वावालिनंवानरेश्वरम् ॥ ८२ ॥ सुग्रीवमेवतद्राज्येरामोऽसावभ्यषेचयत् ॥ सतुसंप्रेषयामासदिदृक्षुर्जनकात्मजाम् ॥ ८३ ॥ हनुमत्प्रमुखान्वीरान्वा
नरान्वानराधिपः ॥ सलङ्घयित्वाजलधिंहनूमान्मारुतात्मजः ॥ ८४ ॥ प्रविश्यनगरींलङ्कांदृष्ट्वासीतांदृढव्रताम् ॥ उपवासकृशांदीनांभृशंशोकपरा

यणाम् ॥ ८५ ॥ मलपङ्केनदिग्धाङ्गीमलिनाम्बरधारिणीम् ॥ निवेदयित्वाभिज्ञानंप्रवृत्तिंचनिवेद्यताम् ॥ ८६ ॥ सप्तमन्त्रिसुतांस्तत्ररावणस्यसुतं
तथा ॥ तोरणस्तम्भमुत्पाट्यनिजघानस्वयंकपिः ॥ ८७ ॥ समाश्वास्यचवैदेहींबभञ्जोपवनंतदा ॥ वनपालान्किङ्करांश्चपञ्चसेनाग्रनायकान् ॥
॥८८॥ रावणस्यसुतेनाथनिगृहीतोयदृच्छया ॥ दृष्ट्वाचराक्षसेन्द्रंतुसंभाष्यतुतथैवच ॥ ८९ ॥ ददाहनगरींलङ्कांस्वलाङ्गूलाग्निनाकपिः ॥ तयादत्तम
भिज्ञानंगृहीत्वापुनरागमत् ॥९०॥ सोऽभिगम्यमहातेजारामंकमललोचनम् ॥ न्यवेदयद्वानरेन्द्रोदृष्टासीतेतितत्त्वतः ॥९१॥ सुग्रीवसहितोरामोवानरै
र्बहुभिर्वृतः ॥ महोदधेस्तटंगत्वातत्रानीकंन्यवेशयत् ॥ ९२ ॥ रावणस्यानुजोभ्राताविभीषणइतीरितः ॥ धर्मात्मासत्यसन्धश्चमहाभागवतोत्तमः ॥
॥ ९३ ॥ ज्ञात्वासमागतंरामंपरित्यज्यस्वपूर्वजम् ॥ राज्यंसुतांश्चदारांश्चराघवंशरणंययौ ॥ ९४ ॥ परिगृह्यचतंरामोमारुतेर्वचनात्प्रभुः ॥ तस्मै
दत्त्वाऽभयंसौम्यंरक्षोराज्येऽभ्यषेचयत् ॥ ९५ ॥ ततस्समुद्रंकाकुत्स्थस्तर्तुकामःप्रपद्यवै ॥ सुप्रसन्नजलंतंतुदृष्ट्वारामोमहाबलः ॥ ९६ ॥ शार्ङ्गमादाय
बाणौघैःशोषयामासवारिधिम् ॥ ततस्तुसरितामीशःकाकुत्स्थंकरुणानिधिम् ॥ ९७ ॥ प्रपद्यशरणंदेवमर्चयामासवारिधिः ॥ पुनरपूर्यजलधिंवरु
णास्त्रेणराघवः ॥ ९८ ॥ उदधेर्वचनात्सेतुंसागरेमकरालये ॥ गिरिभिर्वानरानीतैर्नलंसेतुमकारयत् ॥ ९९ ॥ ततोगत्वापुरींलङ्कांसन्निवेश्यमहाबलम् ॥
सम्यगायोधनंचक्रेवानराणांचरक्षसाम् ॥ ३०० ॥ ततोदशास्यतनयःशक्रजिद्राक्षसोबली ॥ बबन्धनागपाशैश्चतावुभौरामलक्ष्मणौ ॥ १ ॥ वैन
तेयःसमागत्यतान्यस्त्राणिप्रमोचयत् ॥ राक्षसानिहतास्सर्वेवानरैश्चमहाबलैः ॥ २ ॥ रावणस्यानुजंवीरंकुम्भकर्णंमहाबलम् ॥ निजघानरणेरामो
बाणैरग्निशिखोपमैः ॥ ३ ॥ ब्रह्मास्त्रेणेन्द्रजित्कुद्धःपातयामासवानरान् ॥ हनूमतासमानीतोमहौषधिमहीधरः ॥ ४ ॥ तस्यानीतस्यचस्पर्शात्सर्वएव
समुत्थिताः ॥ ततोरामानुजोवीरःशक्रजेतारमाहवे ॥ ५ ॥ निपातयामासशरैर्वृत्रंवज्रधरोयथा ॥ निर्ययावथपौलस्त्योयोद्धुंरामेणसंयुगे ॥ ६ ॥
चतुरङ्गबलैःसार्धंमन्त्रिभिश्चमहाबलः ॥ समन्ततोऽभवद्युद्धंवानराणांचरक्षसाम् ॥ ७॥ रामरावणयोश्चैवतथासौमित्रिणासह ॥ शक्त्यानिपातयामा
सलक्ष्मणंराक्षसेश्वरः ॥ ८ ॥ ततःक्रुद्धोमहातेजाराघवोराक्षसान्तकः ॥ जघानराक्षसान्वीरान्शरैःकालान्तकोपमैः ॥ ९ ॥ प्रदीप्तैर्बाणसाहस्रैःकाल
दण्डोपमैर्भृशम् ॥ छादयामासकाकुत्स्थोदशग्रीवंचराक्षसम् ॥३१०॥ सतुनिर्भिन्नसर्वाङ्गोराघवास्त्रैर्निशाचरः ॥ भयात्प्रदुद्रावरणाल्लङ्कांप्रतिनिशा
चरः ॥ ११ ॥ जगंद्रामममयंपश्यन्निर्वेदाद्गृहमाविशत् ॥ ततोहनूमतानीतोमहौषधिमहागिरिः ॥ १२ ॥ तेनरामानुजस्तूर्णंलब्धसंज्ञोऽभव
त्तदा ॥ दशग्रीवस्ततोहोममारेभेजयकाङ्क्षया ॥ १३ ॥ ध्वंसितंवानरेन्द्रैस्तदभिचारात्मकंरिपोः ॥ पुनर्युद्धायपौलस्त्योरामेणसह

निर्ययौ ॥ १४ ॥ दिव्यंस्यन्दनमारुह्यराक्षसैर्बहुभिर्युतः ॥ ततःशतमखोदिव्यंरथंहयश्वसंयुतम् ॥ १५ ॥ राघवायससूतंहिप्रेषयामासबुद्धिमान् ॥
रथंमातलिनानीतंसमारुह्यरघूत्तमः ॥ १६ ॥ स्तूयमानःसुरगणैर्युयुधेतेनरक्षसा ॥ ततोयुद्धमभूद्घोरंरामरावणयोर्महत् ॥ १७ ॥ सप्ताहिकमहोरात्रं
शस्त्रास्त्रैरतिभीषणम् ॥ विमानस्थाःसुरास्सर्वेददृशुस्तत्रसंयुगम् ॥ १८ ॥ दशग्रीवस्यचिच्छेदशिरांसिरघुसत्तमः ॥ समुत्थितानिबहुशोवरदानात्क
पर्दिनः ॥ १९ ॥ ब्राह्ममस्त्रंमहारौद्रंवधायास्यदुरात्मनः ॥ ससर्जराघवस्तूर्णंकालाग्निसदृशप्रभम् ॥ ३२० ॥ तदस्त्रंराघवोत्सृष्टंरावणस्यस्तनान्तरम् ॥
विदार्यधरणींभित्त्वारसातलतलेगतम् ॥ २१ ॥ संपूज्यमानंभुजगैराघवस्यकरंययौ ॥ सगतासुर्महादैत्यःपपातचममारच ॥ २२ ॥ ततो
देवगणास्सर्वेहर्षनिर्भरमानसाः ॥ ववृषुःपुष्पवर्षाणिमहात्मनिजगद्गुरौ ॥ २३ ॥ जगुर्गन्धर्वपतयोननृतुश्चाप्सरोगणाः ॥ ववुःपुण्यास्तथा
वाताःसुप्रभोऽभूद्दिवाकरः ॥ २४ ॥ तुष्टुवुर्मुनयःसिद्धादेवगन्धर्वकिन्नराः ॥ लङ्कायांराक्षसश्रेष्ठमभिषिच्यविभीषणम् ॥ २५ ॥ कृतकृत्यमि
वात्मानंमेनेरघुकुलोत्तमः ॥ रामस्तत्राब्रवीद्वाक्यमभिषिच्यविभीषणम् ॥२६॥रामउवाच॥ यावच्चन्द्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी॥यावन्ममकथालोके
तावद्राज्यंविभीषणे ॥ २७ ॥ गत्वाममपदंदिव्यंयोगिगम्यंसनातनम् ॥ सपुत्रपौत्रःसगणःसंप्राप्नुहिमहाबल ॥ २८ ॥ ईश्वरउवाच ॥ एवंदत्त्वावरं
तस्मैराक्षसायमहाबलः ॥ संप्राप्यमैथिलींतत्रपरुषंजनसंसदि ॥ २९ ॥ उवाचराघवःसीतांगर्हितंवचनंबहु ॥ सातेनगर्हितासाध्वीविवेशचानलंमहद्व
॥ ३३० ॥ ततोदेवगणास्सर्वेशिवब्रह्मपुरोगमाः ॥ दृष्ट्वातुमातरंवह्नौप्रविशन्तींभयातुराः ॥ समागम्यरघुश्रेष्ठंसर्वेप्राञ्जलयोऽब्रुवन् ॥ ३१ ॥ देवाऊ
चुः ॥ रामराममहाबाहोशृणुत्वंचातिविक्रम ॥ सीतातिविमलासाध्वीतवनित्यानपायिनी ॥३२॥ अनन्याहित्वयासातुभास्करेणप्रभायथा ॥ सेयं
लोकहितार्थायसमुत्पन्नामहीतले ॥ ३३ ॥ मातासर्वस्यजगतःसमस्तजगदाश्रया ॥ रावणःकुम्भकर्णश्चभृत्यौपूर्वपरायणौ ॥ ३४ ॥ शापात्तौसनका
दीनांसमुत्पन्नौमहीतले ॥ तयोर्विमुक्त्यर्थेवैदेहीगृहीतादण्डकेवने ॥ ३५ ॥ तावुभौवैवधंप्राप्तौत्वयाराक्षसपुङ्गवौ ॥ तौविमुक्तौदिवंयातौपुत्रपौत्रसहा
नुगौ ॥ ३६ ॥ त्वंविष्णुस्त्वंपरंब्रह्मयोगिध्येयःसनातनः ॥ त्वमेवसर्वदेवानामनादिनिधनोऽव्ययः ॥ ३७ ॥ त्वंहिनारायणःश्रीमान्सीतालक्ष्मीः
सनातनी ॥ मातासासर्वलोकानांपितात्वंपरमेश्वर ॥ ३८ ॥ नित्यैवैषाजगन्मातातवनित्यानपायिनी ॥ यथासर्वगतस्त्वंहितथाचेयंरघूत्तम ॥ ३९ ॥
तस्माच्छुद्धसमाचारांसीतांसाध्वींदृढव्रताम् ॥ गृहाणसौम्यकाकुत्स्थक्षीराब्धेरिवमाचिरम् ॥ ३४० ॥ ईश्वरउवाच ॥ एतस्मिन्नन्तरेतत्रलोकसाक्षीसपा
वकः ॥ आदायसीतांरामायप्रददौसुरसन्निधौ ॥ अब्रवीत्तत्रकाकुत्स्थंवह्निःसर्वशरीरगः ॥ ४१ ॥ वह्निरुवाच ॥ इयंशुद्धसमाचारासीतानिष्कलमषा

विभो ॥ गृहाणमाचिरंगमसत्यंसत्यंतवाब्रवम् ॥ ४२ ॥ ईश्वरउवाच ॥ ततोऽग्निवचनात्सीतांपरिगृह्यरघूद्वहः ॥ बभूवरामःसंहृष्टःपूज्यमानःसुरोत्तमैः
॥४३॥ राक्षसैर्निहतायेतुसङ्ग्रामेवानरोत्तमाः ॥ पितामहवरात्तूर्णंजीवमानाःसमुत्थिताः ॥ ४४ ॥ ततस्तुपुष्पकंनामविमानंसूर्यसन्निभम् ॥ भ्रात्रागृहीतंसङ्ग्रामेकौवेरंराक्षसेश्वरः ॥ ४५ ॥ तद्राघवायप्रददौवस्त्राण्याभरणानिच ॥ तेनसंपूजितःश्रीमान्रामचन्द्रःप्रतापवान् ॥ ४६ ॥ आरुरोहविमानाग्र्यंवैदेह्याभार्ययासह ॥ लक्ष्मणेनचशूरेणभ्रात्रादशरथात्मजः ॥ ४७ ॥ ऋक्षवानरसङ्घातैःसुग्रीवेणमहात्मना ॥ विभीषणेनशूरेणराक्षसैश्चमहाबलैः
॥ ४८ ॥ यथाविमानेवैकुण्ठेनित्यमुक्तैर्महात्मभिः ॥ तथासर्वैःसमारुह्यऋक्षवानरराक्षसैः ॥ ४९ ॥ अयोध्यांप्रस्थितोरामःस्तूयमानःसुरोत्तमैः ॥ भरद्वाजाश्रमंगत्वारामःसत्यपराक्रमः ॥ ३५० ॥ भरतस्यान्तिकेतत्रहनूमन्तंव्यसर्जयत् ॥ सनिषादालयंगत्वागुहंदृष्ट्वाथवैष्णवम् ॥ ५१ ॥ राघवागमनं
तस्मैप्राहवानरपुङ्गवः ॥ नन्दिग्रामंततोगत्वादृष्ट्वातंराघवानुजम् ॥ ५२ ॥ न्यवेदयत्तथातस्मैरामस्यागमनोत्सवम् ॥ भरतश्चागतंश्रुत्वावानरेणरघूत्तमम् ॥५३॥ प्रहर्षमतुलंलेभेसानुजःससुहृज्जनः ॥ पुनरागत्यकाकुत्स्थंहनूमान्मारुतात्मजः ॥५४॥ सर्वंशशंसरामायभरतस्यचवर्तनम् ॥ राघवस्तु
विमानाग्र्यादवरुह्यसहानुजः ॥ ५५ ॥ ववन्देभार्ययासार्द्धंभरद्वाजंतपोनिधिम् ॥ सतुसंपूजयामासकाकुत्स्थंसानुजंमुनिः ॥ ५६ ॥ पक्वान्नैःफलमूलाद्यैर्वस्त्रैराभरणैरपि ॥ तेनसंपूजितस्तत्रप्रणम्यमुनिसत्तमम् ॥ ५७ ॥ अनुज्ञातःसमारुह्यपुष्पकंसानुगस्तदा ॥ नन्दिग्रामंययौरामःपुष्पकेणसुहृद्वृतः
॥५८॥ मन्त्रिभिःपौरमुख्यैश्चसानुजःकेकयीसुतः ॥ प्रत्युद्ययौनृपवरैःसवलैःपूर्वजंमुदा ॥५९॥ संप्राप्यरघुशार्दूलंववन्देसोऽनुगैर्वृतः ॥ पुष्पकादवरुह्याथराघवःशत्रुतापनः ॥ ३६० ॥ भरतंचैवशत्रुघ्नमुपसंपरिषस्वजे ॥ पुरोहितंवसिष्ठंचमातृवृद्धांश्चबान्धवान् ॥ ६१ ॥ प्रणनाममहातेजाःसीतया
लक्ष्मणेनच ॥ विभीषणंचसुग्रीवंजाम्बवन्तंतथाङ्गदम् ॥ ६२ ॥ हनुमन्तंसुषेणंचभरतःपरिषस्वजे ॥ भ्रातृभिःसानुगैस्तत्रमङ्गलस्नानपूर्वकम् ॥
॥ ६३ ॥ दिव्यमाल्याम्बरधरोदिव्यगन्धानुलेपनः ॥ आरुरोहरथंदिव्यंसुमन्त्राधिष्ठितंशुभम् ॥६४॥ संस्तूयमानस्त्रिदशैर्वैदेह्यालक्ष्मणेनच ॥ भरतश्चैवसुग्रीवःशत्रुघ्नश्चविभीषणः ॥ ६५ ॥ अङ्गदश्चसुषेणश्चजाम्बवान्मारुतात्मजः ॥ नीलोनलश्चसुभगःशरभोगन्धमादनः ॥ ६६ ॥
अन्येचकपयःशूरानिषादाधिपतिर्गुहः ॥ गजस्थाश्चमहावीर्याःपार्थिवेंद्रामहाबलाः ॥ ६७ ॥ गजानश्वान्रथान्सम्यगारुह्यबहुशःशुभान् ॥
नानामङ्गलवादित्रैःस्तुतिभिःपुष्कलैस्तथा ॥ ६८ ॥ ऋक्षवानररक्षोभिर्निषादवरसैनिकैः ॥ प्रविवेशमहातेजाःसाकेतंपुरमव्ययम् ॥
॥ ६९ ॥ आलोक्यराजनगरींपथिराजपुत्रोराजानमेवपितरंपरिचिन्तयानः ॥ सुग्रीवमारुतिविभीषणपुण्यपादसंचारपूतभवनंप्रवि

वेशगामः ॥ २७० ॥ इतिश्रीपाद्मेमहापुराणेपञ्चप० उत्तर० उमामहेश्वरसंवादेरामस्यायोध्याप्रवेशोनामद्विचत्वारिंशदधिकद्विशततमोऽध्यायः
॥ २४२ ॥ शङ्करउवाच ॥ अथतस्मिन्दिनेपुण्येशुभलग्नेशुभान्विते ॥ राघवस्याभिषेकार्थंमङ्गलंचक्रिरेजनाः ॥ १ ॥ वसिष्ठोवामदेवश्चजाबालिरथ
कश्यपः ॥ मार्कण्डेयश्चमौद्गल्यःपर्वतोनारदस्तथा ॥ २ ॥ एतेमहर्षयस्तत्रजपहोमपुरस्सरम् ॥ अभिषेकंशुभंचक्रुर्मुनयोराजसत्तमम् ॥ ३ ॥ नाना
रत्नमयेदिव्येहेमपीठेशुभान्विते ॥ निवेश्यसीतयासार्द्धंश्रियाइवजनार्दनम् ॥ ४ ॥ सौवर्णकलशैर्दिव्यैर्नानारत्नमयैःशुभैः ॥ सर्वतीर्थोदकैःपुण्यैर्माङ्ग
ल्यद्रव्यसंयुतैः ॥ ५ ॥ दूर्वाग्रतुलसीपत्रपुष्पगन्धसमन्वितैः ॥ मन्त्रपूतजलैःशुद्धैर्मुनयःसंशितव्रताः ॥ ६ ॥ अजपन्वैष्णवान्सूक्तांश्चतुर्वेदमयाञ्छु
भान् ॥ अभिषेकंशुभंचक्रुःकाकुत्स्थंजगतांपतिम् ॥ ७ ॥ तस्मिञ्छुभतमेलग्नेदेवदुन्दुभयोदिवि ॥ विनेदुःपुष्पवर्षाणिववृषुश्चसमन्ततः ॥ ८ ॥
दिव्याम्बरैर्भूषणैश्चदिव्यगन्धानुलेपनैः ॥ पुष्पैर्नानाविधैर्दिव्यैर्देव्यासहरघूद्वहः ॥ ९ ॥ ॥ अलंकृतश्चशुशुभेमुनिभिर्वेदपारगैः ॥ छत्रंचचामरंदिव्यं
धृतवाँल्लक्ष्मणस्तदा ॥ १० ॥ पार्श्वेभरतशत्रुघ्नौतालवृन्तौविवीजतुः ॥ दर्पणंप्रददौश्रीमान्राक्षसेन्द्रोविभीषणः ॥ ११ ॥ दधारपूर्णकलशंसुग्रीवो
वानरेश्वरः ॥ जाम्बवांश्चमहातेजाःपुष्पमालांमनोहराम् ॥ १२ ॥ वालिपुत्रस्तुताम्बूलंसकर्पूरंददौहरेः ॥ हनुमान्दीपिकांदिव्यांसुषेणश्चध्वजंशुभम्
॥ १३ ॥ परिवार्यमहात्मानंमन्त्रिणःसमुपासत ॥ सृष्टिर्जयन्तोविजयःसौराष्ट्रोराष्ट्रवर्द्धनः ॥ १४ ॥ अकोपोधर्मपालश्चसुमन्त्रोमन्त्रिणःस्मृताः ॥
राजानश्चनरव्याघ्रानानाजनपदेश्वराः ॥ १५ ॥ पौराश्चनैगमावृद्धाराजानंपर्युपासत ॥ ऋक्षैश्चवानरेन्द्रैश्चमन्त्रिभिःपृथिवीश्वरैः ॥ १६॥ राक्षसैर्द्विज
मुख्यैश्चकिङ्करैश्चसमावृतः ॥ परव्योम्नियथालीनोदेवतैःकमलापतिः ॥ १७ ॥ तथानृपवरःश्रीमान्साकेतेशुशुभेतदा ॥ इन्दीवरदलश्यामंपद्मपत्रनिभे
क्षणम् ॥ १८ ॥ आजानुबाहुंकाकुत्स्थंपीतवस्त्रधरंहरिम् ॥ कम्बुग्रीवंमहोरस्कंविचित्राभरणैर्युतम् ॥ १९ ॥ देव्यासहसमासीनमभिषिक्तंरघूत्तमम् ॥
विमानस्थाःसुरगणाहर्षनिर्भरमानसाः ॥ २० ॥ तुष्टुवुर्जयशब्देनगन्धर्वाप्सरसांगणाः ॥ अभिषिक्तस्ततोरामोवसिष्ठाद्यैर्महर्षिभिः ॥ २१ ॥ शुशुभे
सीतयादेव्यानारायणइवश्रिया ॥ अतिमर्त्यंतयारूपमुपमातीतमुल्बणम् ॥ २२ ॥दृष्ट्वातुष्टावहृष्टात्माशङ्करोहृष्टमानसः॥कृताञ्जलिपुटोभूत्वासानन्दो
गद्गदाकुलः ॥ हर्षयन्सकलान्देवान्मुनीनपिचवानरान् ॥ २३ ॥ महादेवउवाच ॥ नमोमूलप्रकृतयेनित्यायपरमात्मने ॥ सच्चिदानन्दरूपायविश्व
रूपायवेधसे ॥ २४ ॥ नमोनिरन्तरानन्दकन्दमूलायविष्णवे ॥ जगत्त्रयकृतानन्दमूर्त्तयेदिव्यमूर्त्तये ॥ २५ ॥ नमोब्रह्मेन्द्रपूज्यायशङ्करा
भयदायच ॥ नमोविष्णुस्वरूपायसर्वरूपनमोनमः ॥ २६ ॥ उत्पत्तिस्थितिसंहारकारिणेत्रिगुणात्मने ॥ नमोऽस्तुनिर्गतोपाधिस्वरूपायमहात्मने

॥ २७ ॥ अनयाविद्ययादेव्यासीतयोपाधिकारिणे ॥ नमःपुंप्रकृतिभ्यांचयुवाभ्यांजगतांकृते ॥ २८ ॥ जगन्मातापितृभ्यांचजनन्यैराघवायच ॥
नमःप्रपञ्चरूपिण्यैनिष्प्रपञ्चस्वरूपिणे ॥ २९ ॥ नमोध्यानस्वरूपिण्यैयोगिध्येयात्ममूर्त्तये ॥ परिणामापरीणामरिक्ताभ्यांचनमोनमः ॥ ३० ॥
कूटस्थबीजरूपिण्यैसीतायैराघवायच ॥ सीतालक्ष्मीभवान्विष्णुःसीतागौरीभवाञ्छिवः ॥ ३१ ॥ सीतास्वयंहिसावित्रीभवान्ब्रह्माचतुर्मुखः ॥
सीताशचीभवाञ्छक्रःसीतास्वाहानलोभवान् ॥ ३२ ॥ सीतासंहारिणीदेवीयमरूपधरोभवान् ॥ सीताहिसर्वसम्पत्तिःकुबेरस्त्वंरघूत्तम ॥ ३३ ॥
सीतादेवीचरुद्राणीभवान्रुद्रोमहाबलः ॥ सीतातुरोहिणीदेवीचन्द्रस्त्वंलोकसौख्यदः ॥ ३४ ॥ सीतासंज्ञाभवान्सूर्यःसीतारात्रिर्दिवाभवान् ॥ सीता
देवीमहाकालीमहाकालोभवान्सदा ॥ ३५ ॥ स्त्रीलिङ्गंतुत्रिलोकेषुयत्तत्सर्वंहिजानकी ॥ पुन्नामलाञ्छितंयत्तुतत्सर्वंहिभवान्प्रभो ॥ ३६ ॥ सर्वत्र
सर्वदेवेशसीतासर्वत्रधारिणी ॥ तदात्वमपिचत्रातुतच्छक्तिर्विश्वधारिणी ॥ ३७ ॥ तस्मात्कोटिगुणंपुण्यंयुवाभ्यांपरिचिह्नितम् ॥ चिह्नितंशिवशक्ति
भ्यांचरितंतवशान्तिदम् ॥ ३८ ॥ आवांरामजगत्पूज्योममपूज्योसदायुवाम् ॥ त्वन्नामजापिनीगौरीत्वंमन्त्रजपवानहम् ॥ ३९ ॥ मुमूर्षोर्मणि
कर्ण्यांतुअर्द्धोदकनिवासिनः ॥ अहंदिशामितेमन्त्रंतारकंब्रह्मदायकम् ॥ ४० ॥ अतस्त्वंजानकीनाथपरंब्रह्मासिनिश्चितम् ॥ त्वन्मायामोहितास्सर्वे
नत्वांजानन्तितत्त्वतः ॥ ४१ ॥ ईश्वरउवाच ॥ इत्युक्तःशम्भुनारामःप्रसादप्रवणोऽभवत् ॥ दिव्यरूपधरःश्रीमानद्भुताद्भुतदर्शनः ॥ ४२ ॥ तंतथारूप
मालोक्यनरवानरदेवताः ॥ नद्रष्टुमपिशक्तास्तेतज्ज्ञामहदद्भुतम् ॥ ४३ ॥ भयाद्वैत्रिदशश्रेष्ठाःप्रणेमुश्चातिभक्तितः ॥ भीताविज्ञायरामोऽपिन
रवानरदेवताः ॥ मायामानुषतांप्राप्यसदेवानब्रवीत्पुनः ॥ ४४ ॥ रामचन्द्रउवाच ॥ शृणुध्वंदेवतायोमांप्रत्यहंस्तोष्यतेबुधः ॥ स्तवेन
शम्भुनोक्तेनदेवतुल्योभवेन्नरः ॥ ४५ ॥ विमुक्तःसर्वपापेभ्योमत्स्वरूपंसमश्नुते ॥ रणेजयमवाप्नोतिनक्वचित्प्रतिहन्यते ॥ ४६ ॥
भूतवेतालकृत्याभिर्ग्रहैश्चापिनबाध्यते ॥ अपुत्रोलभतेपुत्रंपतिंविन्दतिकन्यका ॥ ४७ ॥ दरिद्रःश्रियमाप्नोतिमत्त्ववाञ्छीलवान्भवेत् ॥
आत्मतुल्यबलःश्रीमाञ्जायतेनात्रसंशयः ॥ ४८ ॥ निर्विघ्नंसर्वकार्येषुसर्वारम्भेषुवैनृणाम् ॥ यंयंकामयतेमर्त्यःसुदुर्लभमनोरथम्
॥ ४९ ॥ षण्मासात्सिद्धिमाप्नोतिस्तवस्यास्यप्रसादतः ॥ यत्पुण्यंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलम् ॥ तत्फलंकोटिगुणितंस्त
वेनानेनलभ्यते ॥ ५० ॥ ईश्वरउवाच ॥ इत्युक्त्वारामचन्द्रोऽसौविससर्जमहेश्वरम् ॥ ब्रह्मादित्रिदशान्सर्वान्विससर्जममा
गतान् ॥ ५१ ॥ अर्चितामानवाःसर्वेऋक्षवानरदेवताः ॥ विसृष्टारामचन्द्रेणप्रीत्यापरमयायुताः ॥ ५२ ॥ इत्थंविसृष्टाःखलुतेचसर्वेस्वंस्वंपदंजग्मु

॥ २५५ ॥

रतीवद्दृष्टाः ॥ परंपठन्तःस्तवमीश्वगोक्तंरामंस्मरन्तोवरविश्वरूपम् ॥ ५३ ॥ इतिश्रीपाद्मेमहापुराणेपञ्चप०उत्तर०उमामहेश्वरसंवादेविश्वदर्शनंनामत्रिच
त्वारिंशदधिकद्विशततमोऽध्यायः ॥२४३॥ शङ्करउवाच ॥ अथरामस्तुवैदेह्याराज्यभोगान्मनोरमान् ॥ बुभुजेवर्षसाहस्रंपालयन्सर्वतोदिशः ॥ १ ॥
अन्तःपुरजनास्सर्वेराक्षसस्यगृहेस्थिताम् ॥ गर्हयन्तिस्मवैदेहींतथाजानपदाजनाः ॥ २ ॥ लोकापवादभीत्याचरामःशत्रुनिवारकः ॥ दर्शयन्मानुषं
धर्ममन्तर्वत्नींनृपात्मजाम् ॥ ३ ॥ वाल्मीकेराश्रमेपुण्येगङ्गातीरेमहावने ॥ विससर्जमहातेजागर्भिणींमुनिसंसदि ॥ ४ ॥ साभर्तुःपरतन्त्राहिउवास
मुनिवेश्मनि ॥ अर्चितामुनिपत्नीभिर्वाल्मीकमुनिरक्षिता ॥ ५ ॥ तत्रैवासूतयमलौनाम्नाकुशलवौसुतौ ॥ तौचतत्रैवमुनिनाववृधातेसुसंस्कृतौ ॥ ६ ॥
रामोऽपिभ्रातृभिस्सार्द्धंपालयामासमेदिनीम् ॥ यमादिगुणसम्पन्नस्सर्वभोगविवर्जितः ॥ ७ ॥ अर्चयन्सततंविष्णुमनादिनिधनंहरिम् ॥ ब्रह्म
चर्यपरोनित्यंशशासपृथिवींनृपः ॥ ८ ॥ शत्रुघ्नोलवणंहत्वामथुरांदेवनिर्मिताम् ॥ पालयामासधर्मात्मापुत्राभ्यांसहराघवः ॥ ९ ॥ गन्धर्वान्भरतो
हत्वासिन्धोरुभयपार्श्वतः ॥ स्वात्मजौस्थापयामासतस्मिन्देशेमहाबलौ ॥ १० ॥ पश्चिमेमद्रदेशेतुमद्रान्हत्वाचलक्ष्मणः ॥ स्वसुतौचमहावीर्यावभि
षिच्यमहाबलः ॥ ११ ॥ गत्वापुनरयोध्यांतुरामपादावुपास्पृशत ॥ ब्राह्मणस्यमृतंबालंकालधर्ममुपागतम् ॥ १२ ॥ जीवयामासकाकुत्स्थः
शूद्रंहत्वाचतापसम् ॥ ततस्तुगौतमीतीरेनैमिषेजनसंसदि ॥ १३ ॥ इयाजवाजिमेधेनराघवःपरवीरहा ॥ काञ्चनींजानकींकृत्वातयासार्द्धंमहा
बलः ॥ १४ ॥ चकारयज्ञान्बहुशोराघवःपरमार्थवित् ॥ अयुतान्यश्वमेधानिवाजपेयानिचप्रभुः ॥ १५ ॥ अग्निष्टोमंविश्वजितंगोमेधंवैष्णवंक्रतुम् ॥
चकारविविधान्यज्ञान्परिपूर्णान्सदक्षिणान् ॥ १६ ॥ एतस्मिन्नन्तरेतत्रवाल्मीकिःसुमहातपाः ॥ सीतामानीयकाकुत्स्थमिदंवचनमब्रवीत्
॥ १७ ॥ वाल्मीकिरुवाच ॥ अपापांमैथिलींरामत्यक्तुंनार्हसिसुव्रत ॥ इयंतुविरजाःसाध्वीभास्करस्यप्रभायथा ॥ अनन्यातवकाकुत्स्थकस्मात्त्यक्ता
त्वयानघ ॥ १८ ॥ रामउवाच ॥ अपापांमैथिलींब्रह्मञ्जानामिवचनात्तव ॥ रावणेनहृतासाध्वीदण्डकेविजनेपुरा ॥ १९ ॥ तंहत्वासमरेसीतां
शुद्धामग्निमुखागताम् ॥ पुनर्यातोऽस्म्ययोध्यायांसीतामादायधर्मतः ॥ २० ॥ लोकापवादःसुमहानभूत्पौरजनेषुच ॥ त्यक्तामयाशुभाचारा
तद्भयात्तवसन्निधौ ॥ २१ ॥ तस्माल्लोकस्यसंतुष्ट्यैसीताममपरायणा ॥ पार्थिवानांमहर्षीणांप्रत्ययंकर्तुमर्हति ॥ २२ ॥ महेश्वरउवाच ॥ एव
मुक्तातदासीतामुनिपार्थिवसंसदि ॥ चकारप्रत्ययंदेवीलोकाश्चर्यकरंसती ॥ २३ ॥ दर्शयन्त्यस्यलोकस्यरामस्यानन्यतांसती ॥ अब्रवीत्प्राञ्जलिः
सीतासर्वेषांजनसंसदि ॥ २४ ॥ सीतोवाच ॥ यथाहंराघवादन्यंमनसापिनचिन्तये ॥ तथामेधरणीदेवीविवरंदातुमर्हति ॥ २५ ॥ मनसाकर्मणा

वाचायथारामंसमर्चये ॥ तथामेधरणीदेवीविवरंदातुमर्हति ॥ २६ ॥ यथैवसत्यमुक्तंमेवेद्मिरामात्परंनच ॥ तथामेधरणीदेवीविवरंदातुमर्हति ॥ २७ ॥ महेश्वरउवाच ॥ एवंशपन्त्यांवैदेह्यांधरणीसहसाभिनत् ॥ २८ ॥ ततोरत्नमयंपीठंपृष्ठेधृत्वाखगेश्वरः ॥ रसातलादाविरभूद्विस्मयंजनयन्नृणाम् ॥ २९ ॥ ततस्तुधरणीदेवीहस्ताभ्यांगृह्यमैथिलीम् ॥ स्वागतेनाभिनन्द्यैनामासनेसंन्यवेशयत् ॥ ३० ॥ तामासनगतांदृष्ट्वादिविदेवगणाभृशम् ॥ पुष्पवृष्टिमविच्छिन्नांदिव्यांसीतामवाकिरन् ॥ ३१ ॥ सापिदिव्याप्सरोभिस्तुपूज्यमानासनातनी ॥ वैनतेयंसमारुह्यतस्मान्मार्गाद्दिवंययौ ॥ ३२ ॥ दासीगणैःपूर्वभागेसंवृताजगदीश्वरी ॥ संप्रापपरमंधामयोगिगम्यंसनातनम् ॥ ३३ ॥ रसातलप्रविष्टांतुतांदृष्ट्वासर्वमानुषाः ॥ साध्वीसाध्वीतिसीतेयमुच्चैःसर्वेप्रचुक्रुशुः ॥ ३४ ॥ रामःशोकसमाविष्टःसंगृह्यवनयात्मजौ ॥ मुनिभिःपार्थिवेन्द्रैश्चसाकेतंप्रविवेशह ॥ ३५ ॥ अथकालेनमहतामातरःसंशितव्रताः ॥ कालधर्मंसमापन्नाभर्त्रास्वर्गंप्रपेदिरे ॥ ३६ ॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ चकाराज्यंधर्मेणराघवःसंशितव्रतः ॥ ३७ ॥ कस्यचित्त्वथकालस्यराघवस्यनिवेशनम् ॥ कालस्तापसरूपेणसंप्राप्तोवाक्यमब्रवीत् ॥ ३८ ॥ कालउवाच ॥ रामराममहाबाहोधात्रासंप्रेषितोऽस्म्यहम् ॥ यद्ब्रवीमिरघुश्रेष्ठतच्छृणुष्वमहामते ॥ ३९ ॥ द्वन्द्वमेवहिकार्यंस्यादावयोःपरिभाषितम् ॥ तदन्तरेप्रविष्टोयस्सवध्योहिभविष्यति ॥ ४० ॥ महेश्वरउवाच ॥ तथेतिचप्रतिश्रुत्यरामोराजीवलोचनः ॥ द्वाःस्थंकृत्वातुसौमित्रिंकालेनसमभाषत ॥ वैवस्वतोऽब्रवीद्वाक्यंरामंदशरथात्मजम् ॥ ४१ ॥ कालउवाच ॥ शृणुरामयथावृत्तंममागमनकारणम् ॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ ४२ ॥ वसास्मिन्मानुषेलोकेहत्वाराक्षसपुङ्गवान् ॥ एवमुक्तःसुरगणैरवतीर्णोऽसिभूतले ॥ ४३ ॥ तदयंसमयःप्राप्तःस्वर्लोकंगमितुंत्वया ॥ सनाथाहिसुराःसर्वेभवन्त्वद्यत्वयानघ ॥ ४४ ॥ महेश्वरउवाच ॥ एवमस्त्वितिकाकुत्स्थोरामःप्राहमहाभुजः ॥ एतस्मिन्नन्तरेतत्रदुर्वासास्तुमहातपाः ॥ राजद्वारमुपागम्यलक्ष्मणंवाक्यमब्रवीत् ॥ ॥ ४५ ॥ दुर्वासाउवाच ॥ मांनिवेदयकाकुत्स्थंशीघ्रंगत्वानृपात्मज ॥ ४६ ॥ महेश्वरउवाच ॥ तमब्रवील्लक्ष्मणस्तुअसांनिध्यमितिद्विज ॥ ततःक्रोधसमाविष्टःप्राहतंमुनिसत्तमः ॥ ४७ ॥ दुर्वासाउवाच ॥ शापंदास्यामिकाकुत्स्थंगमंनयदिदर्शयेः ॥ ४८ ॥ महेश्वरउवाच ॥ तस्माच्छापभयाद्विप्रंराघवायन्यवेदयत् ॥ तत्रैवान्तर्दधेकालःसर्वभूतभयावहः ॥ ४९ ॥ पूजयामासतंप्राप्तमृषिंदुर्वाससंनृपः ॥ अग्रजस्यप्रतिज्ञांतुविज्ञायरघुसत्तमः ॥ ५० ॥ तत्याजमानुषंरूपंलक्ष्मणःसरयूजले ॥ विसृज्यमानुषंरूपंप्रविवेशस्वकांतनुम् ॥ ५१ ॥ फणासहस्रसंयुक्तंकोटीन्दुसमवर्चसम् ॥ दिव्यमाल्याम्बरधरोदिव्यगन्धानुलेपनः ॥ ५२ ॥ नागकन्यासहस्रैस्तुसंवृतःसमलङ्कृतः ॥ विमानंदिव्यमारुह्यप्रययौवैष्णवंपदम् ॥ ५३ ॥ लक्ष्मणस्य

प० पु०
॥२९६॥

गतिंसम्यग्विदित्वारघुसत्तमः ॥ स्वयमप्यथकाकुत्स्थःस्वर्गंगन्तुमभीप्सितः ॥ ५४ ॥ अभिषिच्याथकाकुत्स्थःस्वात्मजौचकुशीलवौ ॥ विभज्यरथ
नागाश्वंसधनंप्रददौतयोः ॥ ५५ ॥ कुशवत्यांकुशंतंचशरवत्यांलवंतथा ॥ स्थापयामासधर्मेणराज्येस्वंरघुसत्तमः ॥ ५६ ॥ अभिप्रायंतुविज्ञाय
रामस्यविदितात्मनः ॥ आजग्मुर्वानराःसर्वेराक्षसाःसुमहाबलाः ॥ ५७ ॥ विभीषणोऽथसुग्रीवोजाम्बवान्मारुतात्मजः ॥ नीलोनलःसुषेणश्चनिषादा
धिपतिर्गुहः ॥ ५८ ॥ अभिषिच्यसुतौवीरौशत्रुघ्नश्चमहामनाः ॥ सर्वएतेसमाजग्मुरयोध्यांरामपालिताम् ॥ ५९ ॥ तेप्रणम्यमहात्मानमूचुःप्राञ्ज
लयस्तथा ॥ ६० ॥ वानरप्रभृतयऊचुः ॥ स्वर्लोकंगन्तुमुद्युक्तंज्ञात्वात्वांरघुसत्तम ॥ आगताःस्मोवयंसर्वेतवानुगमनंप्रति ॥ ६१ ॥ नशक्ताःस्मःक्षणं
रामजीवितुंत्वांविनाप्रभो ॥ तस्मात्त्वयाविशालाक्षगच्छामस्त्रिदशालयम् ॥६२॥ महेश्वरउवाच ॥ तैरेवमुक्तःकाकुत्स्थोबाढमित्यब्रवीत्ततः ॥ अथो
वाचमहातेजाराक्षसेन्द्रंविभीषणम् ॥६३॥ रामउवाच॥राज्यंप्रशाधिधर्मेणमाप्रतिज्ञांवृथाकृथाः॥यावच्चन्द्रश्चसूर्यश्चयात्तिष्ठतिमेदिनी॥तावद्रमस्वसुप्री
तःकालेममपदंव्रज ॥६४॥ महेश्वरउवाच ॥ इत्युक्त्वाथसकाकुत्स्थःस्वार्चाविष्णुंसनातनम् ॥ श्रीरङ्गशायिनंसौम्यमिक्ष्वाकुकुलदैवतम् ॥ ६५ ॥ संप्री
त्याप्रददौतस्मैरामोराजीवलोचनः ॥ हनुमन्तमथोवाचराघवःशत्रुसूदनः ॥६६॥ रामउवाच ॥ मत्कथाःप्रचरिष्यन्तियावल्लोकेहरीश्वर ॥ तावद्रमस्व
मेदिन्यांकालेमांव्रजसुव्रत ॥ ६७ ॥ महेश्वरउवाच ॥ तमेवमुक्त्वाकाकुत्स्थोजाम्बवन्तमथाब्रवीत् ॥ ६८ ॥ रामउवाच ॥ द्वापरेसमनुप्राप्तेयदूना
मन्वयेपुनः ॥ ६९ ॥ भूभारस्यविनाशायसमुत्पत्स्येत्वहंभुवि ॥ करिष्येतत्रसंग्रामंत्वयाभल्लूकसत्तम ॥ ७० ॥ महेश्वरउवाच ॥ तमेवमुक्त्वा
काकुत्स्थःसर्वांस्तानृक्षवानरान् ॥ उवाचवाचागच्छध्वमितिरामोमहाबलः ॥ ७१ ॥ मन्त्रिणोनैगमाश्चैवभरतःकैकयीसुतः ॥ राघवस्या
नुगमनेनिश्चितास्तेसमाययुः ॥ ७२ ॥ ततःशुक्लाम्बरधरोब्रह्मचारीययौपरम् ॥ कुशान्गृहीत्वापाणिभ्यामाचम्यप्रययावथ ॥७३॥ रामस्यदक्षिणेपार्श्वे
पद्महस्तारमागता॥तथैवधरणीदेवीदक्षिणेतरगातथा॥७४॥वेदाःसाङ्गाःपुराणानिसेतिहासानिसर्वतः॥ ॐकारोथवषट्कारःसावित्रीलोकपावनी॥७५॥
अस्त्र[1]शस्त्राणिचतदाधनुर्गद्यानिपार्वति ॥ अनुजग्मुस्तथारामंसर्वेपुरुषविग्रहाः ॥७६॥ भरतश्चैवशत्रुघ्नःसर्वेपुरनिवासिनः ॥ सपुत्रदाराःकाकुत्स्थमनु ॥२९६॥
जग्मुःसहानुगाः ॥ ७७ ॥ मन्त्रिणोभृत्यवर्गाश्चकिङ्करानैगमास्तथा ॥ वानराश्चैवऋक्षाश्चसुग्रीवसहितास्तदा ॥ ७८ ॥ सपुत्रदाराःकाकुत्स्थमन्वगच्छ
न्महामतिम् ॥ पशवःपक्षिणश्चैवसर्वेस्थावरजङ्गमाः ॥७९॥ अनुजग्मुर्महात्मानंसमीपस्थानगोत्तमाः ॥ येचपश्यन्तिकाकुत्स्थंस्वपथानुगतंप्रभुम् ॥

उ.खं.स.
अ० २४४

१ 'इष्टशास्त्राणि' इ०पा०।

॥ ८० ॥ तेतथानुगतारामंनिवर्त्तन्तेभकेचन ॥ अथत्रियोजनंगत्वानदीपश्चान्मुखींस्थिताम् ॥ ८१ ॥ सरयूंपुण्यसलिलांप्रविवेशसहानुगः ॥ ततः
पितामहोब्रह्मासर्वदेवगणावृतः ॥ ८२ ॥ तुष्टावरघुशार्दूलमृषिभिःसार्द्धमक्षरैः ॥ अब्रवीत्तत्रकाकुत्स्थंप्रविष्टंसरयूजले ॥ ८३ ॥ ब्रह्मोवाच ॥ आगच्छ
विष्णोभद्रंतेदिष्ट्याप्राप्तोऽसिमानद ॥ भ्रातृभिस्सहदेवाभैःप्रविशस्वनिजांतनुम् ॥८४॥ वैष्णवींतांमहातेजांदेवाकारांसनातनीम् ॥ त्वंहिलोकगतिर्देव
नत्वांकेचित्तुजानते ॥ ८५ ॥ त्वामचिन्त्यंमहात्मानमक्षरंसर्वसंग्रहम् ॥ यमिच्छसिमहातेजस्तांतनुंप्रविशस्वभोः ॥ ८६ ॥ महेश्वरउवाच ॥ तस्मि
न्सूर्यकराकीर्णेपुष्पवृष्टिनिपातिते ॥ उत्सृज्यमानुषंरूपंस्वांतनुंप्रविवेशह ॥ ८७ ॥ अंशाभ्यांशङ्खचक्राभ्यांशत्रुघ्नभरतावुभौ ॥ प्रपेदातेमहात्मानौ
दिव्यतेजस्समन्वितौ ॥ ८८ ॥ शङ्खचक्रगदाशार्ङ्गपद्महस्तश्चतुर्भुजः ॥ दिव्याभरणसम्पन्नोदिव्यगन्धानुलेपनः ॥ ८९ ॥ दिव्यपीताम्बरधरः
पद्मपत्रनिभेक्षणः॥युवाकुमारःसौम्याङ्गःकोमलावयवोज्ज्वलः॥९०॥सुस्निग्धनीलकुटिलकुन्तलःशुभलक्षणः ॥ नवदूर्वांकुरश्यामःपूर्णचन्द्रनिभाननः
॥९१॥ देवीभ्यांसहितःश्रीमान्विमानमधिरुह्यच ॥ तस्मिन्सिंहासनेदिव्येमूलेकल्पतरोःप्रभुः ॥९२॥ निषसादमहातेजाःसर्वदेवैरभिष्टुतः ॥ राघवानु
गतायेचऋक्षवानरमानुषाः ॥ ९३ ॥ स्पृष्ट्वैवसरयूतोयंसुखेनत्यक्तजीविताः ॥ रामप्रसादात्तेसर्वेदिव्यरूपधराःशुभाः ॥ ९४ ॥ दिव्यमाल्या
म्बरधरादिव्यमङ्गलवर्चसः ॥ आरुरुहुर्विमानंतदसङ्ख्यास्तत्रदेहिनः ॥९५॥ सर्वैःपरिवृतःश्रीमान्रामोराजीवलोचनः ॥ पूजितःसुरसिद्धौघैर्मुनिभि
स्तुमहात्मभिः ॥ ९६ ॥ आययौशाश्वतंदिव्यमक्षरंस्वपदंविभुः ॥ यःपठेद्रामचरितंश्लोकंश्लोकार्धमेववा ॥ ९७ ॥ शृणुयाद्वातथाभक्त्यास्मरेद्वा
शुभदर्शने ॥ कोटिजन्मार्जितात्पापाज्ज्ञानतोऽज्ञानतःकृतात् ॥९८॥ विमुक्तोवैष्णवंलोकंपुत्रदारैश्चबान्धवैः ॥ समाप्नुयाद्योगगम्यमनायासेनवैनरः ॥
॥ ९९ ॥ एतत्तेकथितंदेविरामस्यचरितंमहत् ॥ धन्योऽस्म्यहंत्वयादेविरामचन्द्रस्यकीर्त्तनात् ॥ किमन्यच्छ्रोतुकामासितद्ब्रवीमिवरानने ॥ १०० ॥
इतिश्रीपाद्मेमहापुराणेपञ्चप०उत्तर० उमामहेश्वरसंवादेश्रीरामचरितकथनंनामचतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥ श्रीपार्वत्युवाच ॥
रघुनाथस्यचरितंसाधूक्तंहित्वयाविभो ॥ श्रुत्वाधन्यास्मिदेवेशत्वत्प्रसादान्महेश्वर॥१॥वसुदेवसुतस्यास्यकृष्णस्यचरितंमहत् ॥ श्रोतुमिच्छामिदेवेश
चरितंकल्मषापहम्॥२॥रुद्रउवाच॥शृणुदेविप्रवक्ष्यामिकृष्णस्यास्यमहात्मनः ॥चरितंवासुदेवस्यसर्वेषांफलदंनृणाम्॥३॥यदूनामन्वयेदेविवसुदेवइती
रितः ॥ देवमीढस्यपुत्रोऽभूत्सर्वधर्मविदांवरः ॥ ४ ॥ देवकस्यात्मजांदेविदेवकींदेववर्णिनीम् ॥ उपयेमेविधानेनमथुरायांनृपात्मजः ॥ ५ ॥ उग्रसे
नस्यपुत्रोऽभूत्कंसःशूरोमहाबलः ॥ तयोरथवरंतत्रचोदयामाससारथिः॥६॥समागतेषुतेष्वेवंपथिरम्येशुभावहे ॥ अन्तरिक्षेऽशरीरावाक्प्राहगम्भीरया

